Reg. No. C 1073

Vol. XXXIX. 1956

No. 1

३९श-वर्षस्य

१म-संख्या

...कीये

वैशाखे

मासे






# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्

श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)

Foreign price—1-4s

# विज्ञापनम्

## विशेषतोद्रष्टव्यम्

संस्कृतसाहित्यपरिषदो द्विषष्ट्यधिकत्रयोदशशततम ( १३६२ ) वङ्गाब्दीय-वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा (V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। यैस्तावदस्याः परिषदः सदस्यपदमङ्गीकर्तुं नेष्यते तैर्वेयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्

१६८।१, राजा-दीनेन्द्रष्ट्रीट,

संस्कृतसाहित्यपरिषद्-भवनम्, कलिकाता—४

---



(Cont. to Cover 3rd Page)

---

Printed by Bishnupada Bhattacharya M. A., Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, ShyambazarCalcutta.

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

| | | |
|---|---|---|
| Vol. XXXIX. | १८७८-शकीये वैशाखे | May |
| No. 1 | ३९श-वर्षस्य १म-संख्या | 1956. |

## मतिमञ्जरी

### संस्कृतसाहित्यपरिषद्वृत्तम्

( १ )

वर्तमाने काले चिन्ताशीलजननायकानां मुखेभ्यः प्रायेणैव संस्कृतभाषायाः प्रशस्तिः श्रूयते। सुलक्षणमिदमित्यत्र नास्ति लवोऽपि सन्देहस्य। भारतवर्षस्य जीवातुभूतं वस्तु संस्कृतभाषैव सन्धारयति। भारतस्योपरि समारोपितो मूढ़ताया मिथ्यापवादः संस्कृतभाषानिवद्ध-ग्रन्थकलापस्य साक्षितयोपन्यासेनैव खण्डितः समपादि।

तस्याः संस्कृतभाषायाः कतिपये निर्व्याजसेवकाः पूर्वमष्टत्रिंशतो वत्सरेभ्यः क्वचन कल्याणमये समये 'संस्कृतसाहित्यपरिष'दिति नाम्ना काञ्चित् परिषदं स्थापितवन्तः। परिषदि कृत्यव्यापृतानामनाड़म्बरेणाविरामसमुद्यमेन सेयं संस्कृतसाहित्यपरिषदद्य कस्याश्चन महामहिममयसंस्थायाः पदं गृहीतवती। स्तोकं विहितप्रचाराया अस्याः परिषदो बहुदिग्विततकृत्यपद्धतीनां समग्रं वृत्तं वहव एव नावगच्छन्ति। तत एव समपेक्षितमस्याः कृत्यकदम्बकस्य स्वल्पपरिचयप्रदानम्, तत्प्रसङ्गेन

च सुतरां समादरयोग्यायास्तस्याः समपेक्षितवस्तुकदम्बकं प्रति राष्ट्रहित-कामिराष्ट्राधिकारस्य संस्कृतविद्यानुरागिणां भारतवासिनां च साग्रहसदय-दृष्टिसमाकर्षणम् ।

कलिकातामहानगर्यां उत्तरप्रान्ते कस्यचन दीनब्राह्मणपण्डितस्य विद्यामन्दिरे स्वल्पसंख्याकसदस्यानां समवायेनास्याः परिषदः प्रारम्भः समजनि । किन्त्वद्य भारतवर्षे नास्ति प्रायेण तथा किमपि विद्यास्थानं, यत्र किलास्याः संस्कृतसाहित्यपरिषदः सदस्या नोपलभ्यन्ते । काश्मीर-त्रिवाङ्कुर-प्रभृतिदूरगतभारतीयदेशगतैस्तथा ओस्लो-बार्लिन-प्रमुखसुदूरतर-विदेशगतैः प्रधानभूतविद्यास्थानैः समं सम्पादितः किलास्या गभीरः सम्बन्धः । निरुक्तविद्यास्थानानां बहवः सुविश्रुता मनीषिणः परिषद्-भवनमागत्य परिषदः कृत्यनिचयपरीक्षणेन सुभृशं सन्तोषं प्रकाशित-वन्तः ।

सूचितमेवेदमधस्ताद् यदस्याः परिषदः क्षुद्रतमे क्वचन चतुष्पाठीगृहे प्रारम्भः समजनीति । किन्तु सैषा परिषत् सम्प्रति भूयसां संस्कृतानुरक्तानां तथा परमोदारस्य राष्ट्राधिकारस्य महतानुकूल्येन समन्ततः कृत्यप्रसारं सुरम्यस्वीयनूतनद्वितलहर्म्ये चात्मनः प्रतिष्ठां प्राप्तवती । तृतीयं तलमपि नातिचिरेणैव सम्भाव्यते तस्य ।

एवं सुप्रकटेष्वपि सर्वत्राभ्युदयलक्षणेषु यं विशालं कर्मपथमग्रे कृत्वा परिषत्परिचालकाः पुरः सरन्ति ; तमपेक्ष्य परिषदो वर्तमानसदस्य-संख्या अंशतो निर्मितं नूतनभवनञ्चेत्यादिकं किमपि न पर्याप्तिं लभते ।

परिषदि हस्तलिखितग्रन्थानां सुमहान् संग्रहस्तुलां नार्हति । विभिन्न-प्रान्तेभ्यः सप्तसहस्री तद्ग्रन्थानां प्रायेण संगृहीता । तस्मिन् संग्रहे भूकैलासराजभवनग्रन्थशालायाः शोभावाजारराजभवनग्रन्थशालायाः सुविश्रुततन्त्राचार्यपूर्णानन्दगिरिग्रन्थशालायाश्च बहवो दुर्लभा ग्रन्था विशेषतः समुल्लेखमर्हन्ति ।

नाना स्थानेभ्यो विविधा विद्यार्थिनः पण्डिताश्च विद्यानुशीलनार्थं परिषद्ग्रन्थागारे सम्मिलन्ति। किन्तु निरुक्तग्रन्थानां विषयवर्णना-समन्वितसूचीविरहेण गवेषणोपयुक्तनिरुपद्रवस्थानाभावेन च न ते स्वच्छन्दतः स्वस्वकृत्यमनुष्ठातुमलं भवन्ति। तादृशसूचीसंकलनं तादृशस्थानव्यवस्थापनञ्चेत्येतदुभयमेव प्रभूतार्थव्ययसाध्यम्। तस्मिन् विषये पश्चिमवङ्गराष्ट्राधिकारेण कृतं किञ्चिदानुकूल्यम्। किन्तु कृत्यगौरवात् समपेक्षितमितोऽप्यधिकम्।

परिषदि मुद्रापितग्रन्थानां संग्रहोऽप्यनन्यसाधारणः। अष्टात्रिंशतं वत्सरान् यावत् सविशेषविचारेण प्रभूतवित्तव्ययेन च ग्रन्थानां दश-सहस्री प्रायेण संगृहीता। संख्यातीता विद्यार्थिनो गवेषकाश्च ग्रन्थैरेतैः सततमुपक्रियन्ते। किन्त्विदानीं परिषदस्य दुर्लभमहैश्वर्यसम्भारस्य सम्यक्तया संरक्षणप्रबन्धं कर्त्तुं नालमभूत्। आधारस्य विरहेण बहवो मुद्रापिता हस्तलिखिताश्च ग्रन्था अशक्यतया सुविन्यासस्य क्षतिग्रस्ता भवन्ति।

( क्रमशः )

---

## गयातर्पणम्

[ निबन्धकः—श्रीहरिपदकाव्यस्मृतिमीमांसातीर्थः ]

पितस्त्वं त्रातासि प्रणततनयान् दुष्कृतियुतान्
सदा भ्रान्तान् विष्वङ्नयन कृपयास्मानत्र विभो।
यथा बाल्ये दोषान् परुषमृदुवाग्भिर्व्यपनुदन्
विनेतासीस्तद्वद् व्यपनय दिविष्ठोऽपि दुरितम्॥१॥
कदा वास्मच्छ्रद्धा मनसि जनिता तर्पणविधौ
स्वधाकृत्ये श्रौते वचसि भविता शुद्धधिषणा ?

अजानन् माहात्म्यं जनक परमं नैव कृतवान्
यथावद् वेदोक्तं तदिह मम चेतो व्यथयति ॥२॥
गया दृष्टा पूर्वं त्वयि लसति मत्तेऽसकृदये
ज्वलद्दीपालोकैर्निचितनगरी पण्यनिलया ।
रजोभिः संछन्ना विरलजनसङ्कीर्णसरणि-
र्विपर्यस्तं सर्वं नवमिव विभात्येतदधुना ॥३॥
नदी शापस्तब्धा-चलज्जलगतिः सैकतमयी
तपःशीर्णा पाण्डुर्वहति जलमन्तर्मृदुजवा ।
किमेषा शैलाङ्कात् क्षितितलमितानादररुषा
जुगूह स्वं कार्यं रसरयमितो भूमिविवरे ॥४॥
स्वधाभुक्तृप्त्यर्थं स्रवदमृतवत् स्वच्छसलिलं
सलीलं प्रच्छाद्य स्वतनुसिकताभिः प्रवहति ।
तिलैः साकं तोयं स्वसुतकरदत्तन्तु पितरो
निपीयामी नूनं मुदितमनसः स्वस्ति ददति ॥५॥
शिलापट्टे कृष्णे गयशिरसि विधेताः स्फुटतरं
समर्प्याङ्घ्रिं पिण्डानपि तदुपरि न्यस्य विधितः ।
प्रसन्नं नश्चित्तं व्यपगतमये ह्यन्तिममृणं
प्रसन्ना जाता नः पितर इति बुद्धिश्च भवति ॥६॥
तृतीयेऽह्नि क्षेत्रेऽक्षयवटतले नैऋतदिशि
सभोज्यान् पिण्डांश्च द्विजसुरभिसात्कृत्य विधिमत् ।
नमस्कृत्याभ्यर्णं वटतरुमथो स्वस्तिवचनं
गृहीत्वा तीर्थेभ्यो मम हृदयमासीदतिमलम् ॥७॥
ततः प्रत्यावृत्तः स्वकुहरगतः पन्नग इव
प्रलीनः स्वे गेहे जड़ इव नयाम्येष दिवसान् ।
गयाक्षेत्रं पुण्यं स च वटतरुः सा च तटिनी
पदाङ्कः श्रीविष्णोर्मम मनसि जागर्त्ति युगपत् ॥८॥

पित्रोः पदाम्बुजयुगं प्रयतः प्रणम्य
तच्चाक्षयं वटतरुं सरितञ्च फल्गुम् ।
भक्तं गयासुरमथ द्विजदेवताश्च
श्रीमद्गदाधरपदे मुहुरानतोऽहम् ॥६॥

---

# वेदान्तविमर्षः

( प्रथमभागः )

[ निबन्धकः—श्रीचारुकृष्णदर्शनाचार्यः ]

यन्निमित्तमुपादानं जगतो निःसहायकम्।
जीवाः क्षुद्रतमा अंशा यस्य च ब्रह्म तन्नुमः ॥

वेदान्तास्तावदाम्नायस्यौपनिषद्भागाः, वेदानामन्तिमशाखासु पाठात् तेषां वेदान्तत्वं नाम। ब्रह्मसामीप्यप्राप्तिसाधनत्वात् तेषामुपनिषत्त्वम्। उपसमीपे निषीदत्यनयेति व्युत्पत्तिः। तत्प्रतिपादकत्वाद्ब्रह्मसूत्रादेरपि वेदान्तत्वम्।

तदधिकारी यथाशास्त्रमधीताशेषवेदः स्वाश्रमोचितकर्म्मभिः सञ्चितपापक्षयात् कथञ्चित् सत्त्वशुद्धे र्विषयभोगविमुखो मोक्षमाणः शमदमादिमान् द्विजातिः "शान्तो दान्त उपरतस्तितिक्षुरि"ति श्रुतेः। नित्यनैमित्तिककर्म्मभिः सर्व्वथा चित्तस्य शुद्धौ सर्व्वेषां श्रवणादेव जनकादिवदात्मज्ञानोत्पत्तौ मननध्यानयोर्वैयर्थ्यप्रसङ्गात्।

"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्म्मणः।
तत्रादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥"

इति स्मृतेः, "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमान" इति श्रुतिश्च विरुध्येत। अतः सन्न्यासिनां ध्यानस्यैव सम्यक्

सत्त्वशुद्धे र्हेतुत्वकीर्त्तनात्। तस्माद् विषयवैमुख्येन मुमुक्षापादकचित्त-शुद्धे रेवात्रापेक्षा ज्ञेया।

"अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते।"

इति श्रुतेः, विद्याभिन्नं यत् साधनं कर्म्म तदेवाविद्याश्रौती, तथा मृत्युं पापं विनाश्य विद्ययाज्ञानेनामृतं मोक्षं लभते इत्यर्थः। स्मरति चैत-मेवार्थं मनुः—

"तपो विद्या च विप्रस्य निःश्रेयसकरं परम्।
तपसा किल्विषं हन्ति विद्ययाऽमृतमश्नुते"॥ इति,

तपश्च स्व-स्वधर्म्माचरणं तदप्युक्तं मनुना—

"ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम्।
वैश्यस्य तु तपो वार्त्ता तपः शूद्रस्य सेवनम्"॥ इति।

नच नित्यादेरवान्तरफलं पितृलोकप्राप्तिः, सन्ध्यावन्दनफलब्रह्मलोक-प्राप्तिवत् तस्या अकीर्त्तनात्, परं तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेतिश्रुतेर्ज्ञानसाधनत्वमेव नित्यानां ज्ञेयम्। विविदिषासाधनस्यैव वेदनसाधनत्वात् अश्वेन जिगमिषति अश्वेन गच्छतीतिवत्। "कर्म्मणा पितृलोक" इतिश्रुतिश्च पितृलोककामानां श्राद्धादिकर्म्मपराणां ज्ञेया "पितॄन् यान्ति पितृव्रता" इति स्मृतेः, अथवा पशुयागवतां मांसैर्होमकारिणां पितृलोकप्राप्तिश्रवणात् तत्परा। अन्यथा विश्वजिदादियाजिनामपि पितृलोकगत्यापत्तेरिति बोध्यम्।

विषयः सर्गादिकारणं ब्रह्म, "ब्रह्म वेद ब्रह्मैव भवति" "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इत्यादि श्रुतिभ्यः। सम्बन्धश्च शास्त्रब्रह्मणोः प्रतिपाद्यप्रतिपादकभावः प्रयोजनं च मुक्तिर्ब्रह्मप्राप्तिश्च, "यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति" "गुहाग्रन्थिभ्योविमुक्तोऽमृतो भवती"तिश्रुति-भ्याम्। स चाधिकारी स्वर्गादीनां कर्म्मार्ज्जितानां सान्तत्वसातिशयत्व दर्शनाज्जातनिर्वेदो मोक्षस्य चानन्तनिरतिशयत्वदर्शनात् तदुपायब्रह्मविद्या-प्राप्तये वेदपारगं ब्रह्मैकनिष्ठं सद्गुरुमुपेयात् सोपायनः। "तद्गुरु-

मेवाभिगच्छेत् समितपाणिः श्रोत्रियं ब्रह्मनिष्ठमिति श्रुतेः। गुरुश्च तस्मा अधिकारिणेऽनुगामिने यथोक्तकारिणेऽनभिमानिने विनयशालिने यथावद् ब्रह्मविद्यामुपदिशेत्, एतदेवाह श्रुतिः—यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्तीति, यथा प्रज्वलितादग्नेस्तुल्यरूपा एव स्फुलिङ्गा बहुशः प्रजायन्ते तथा सृष्टिकाले अक्षराद् ब्रह्मणः स्वरूपाश्चिद्रूपा एव विविधाः सुरनरादिभेदेनासंख्येया भावा जीवाः प्रजायन्ते आविर्भवन्ति प्रलये च तत्रैवापियन्ति निलीनास्तिष्ठन्ति न तु म्रियन्ते "न जीवो म्रियते" इति श्रुतेरित्यर्थः। अत्र सरूपा इत्यनेन जीवानां चिद्रूपेणैवाविर्भावो दर्शितः नतु भूतानामिवान्यथाभावः। एतेन नित्यत्वं तेषां दर्शितं सूत्रकृताप्युक्तं-"नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः" इति सृष्टिवाक्ये स्फुलिङ्गनिदर्शनाद् बहुवचनाद् दृष्टान्ते वीप्सार्थकचशस्प्रत्ययान्तसहस्रशब्दाद् दार्ष्टान्तिके विविधशब्देन तस्यैव परामर्शाच्च बहुत्वमेव जीवानां प्राप्तं सृष्टिवाक्यस्य प्राबल्यात्, वह्नेः स्फुलिङ्गानां बाहुल्यस्यैव दर्शनाच्च। वेदान्तेष्वविद्याया असिद्धेश्चैकजीववादस्य मूलत एव कुठारः। स्मरति च वेदार्थं याज्ञवल्क्यः—

"निःसरन्ति यथा लोहपिण्डात् तप्तात् स्फुलिङ्गकाः।
सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि"॥ इति

तदनन्तरं प्राणेन्द्रियभूतानामुत्पत्तिमाह—

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी"ति।

एवञ्च जगत्कारणत्वेनात्र ब्रह्मोपदर्शितं भवति, न चात्राविद्यागन्धोऽपि, तथाच परिणामवाद एव श्रुत्या प्रदर्शित इति नात्र कथमप्यध्यारोपापवादन्यायावसरः वेदान्ते रज्जुसर्पादेरभावात्, किन्तु पृथिव्या वृक्षादिवत् ब्रह्मणो जगत उत्पत्तिः, यथा पृथिव्यामोषधयः सम्भवन्ति यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वमिति श्रुत्यन्तरादिति बोध्यम्। न "चाक्षरात् परतः पर" इत्यक्षरपदादव्याकृताख्याविद्याप्राप्तिरसिद्धे

वेदान्तेष्वभावात एतदक्षरपदस्य जीवपरत्वात् जीवस्य च परत्वमाका शाद्यपेक्षया बोध्यं नित्यत्वाच्चिद्रूपत्वाच्च ।

नचाकाशस्य घटोपाधिकृतघटच्छिद्रवद् ब्रह्मणो देहोपाधिकृतो जीवभाव इति वाच्यं, तथा सति स्फुलिङ्गं विहाय घटच्छिद्रमेव दृष्टान्त्यकरिष्यत्, नच वेदान्ते तद्दृश्यते । नच जीवाः पादब्रह्मणोऽंशास्तस्य विकारहेतुत्वाद् विकारान्वितत्वाच्च किन्तु त्रिपद्भूतविशुद्धब्रह्मण एवांशा भिन्नाभिन्नत्वादविकारत्वाच्च । अतो मुक्तानामर्चिरादिगत्या विशुद्धब्रह्मप्राप्तिरेवोक्ता श्रुतिषु, स्फुलिङ्गाश्च वह्नेरंशा एव नत्ववच्छिन्नाः केनचित् प्रतिबिम्बा वा कस्यचित् । एवं जीवा अप्यंशा एव ब्रह्मणः नत्ववच्छिन्नाः प्रतिबिम्बा वा, प्रथममेव जीवसृष्ट्यभिधानाच्च । तथाच न्यायौ "अंशो नाना व्यपदेशात्" "मन्त्रवर्णादि"ति । मन्त्रश्च "यथा सुदीप्तात पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपा" इति । भगवताप्युक्तं—

"ममैवांशो जीवलोके जीवभूतः सनातन इति । न चावच्छिन्नः प्रतिबिम्बो वा अंशो भवति, परैरप्युक्तं "अंश इव कल्पित" इति । न च सूत्रे गीतायां वा इवशब्द उक्त इत्यंशवाद एव वेदान्तसिद्धान्तो ज्ञेयः ।

अवच्छेदप्रतिबिम्बवादौ च न वेदान्तसम्मतौ किन्तु योगिसम्मतावेव तैरेवोक्तत्वात् तथाच "योगशास्त्रं च मत्प्रोक्तं ज्ञेयं योगमभीप्सता" इत्यभिधायाह याज्ञवल्क्यः ।

"आकाशमेकं हि यथा घटादिषु पृथग् भवेत ।
तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमान" ॥ इति

पश्चाच्चान्तरान्तरा प्रकृत्यहङ्कारादिविकाराणां सत्त्वरजस्तमसां योगप्रवृत्तेरुपायानां चोल्लेखो दृश्यते ।

यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना वहुधैको बभूव ।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥
"एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा वहुधा चैव दृश्यते जलचन्द्रवत ॥

इति पद्यद्वयं च योगशास्त्रीयमेव न श्रौतं, विवर्त्ताचार्येण मोक्षशास्त्रीयमुक्तं भास्कराचार्येण च योगशास्त्रीयमिति कण्ठत एवोक्तं, श्रौतत्वे तथाच श्रुतिरित्युच्येत, एतेन ब्रह्मबिन्दोरप्रामाण्यं ज्ञयम्। जीवस्य घटाकाशवदवच्छिन्नत्वे अवच्छेदकस्यैव गत्यागत्यादि स्यान्नात्मनः—

"घटसंवृतमाकाशं नीयमाने यथा घटे।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः"॥

इति सिद्धान्तलेशधृतपद्यात्, तथा च "उत्क्रान्तिगत्यागतीनामि"ति सूत्रमुच्छिद्येत, अत्र हि गत्यादिहेतुभिरेव जीवस्याणुत्वं साधितं तच्च व्याहतं हेतूनामसिद्धेरिति ध्येयम्, विस्तरस्तु सूत्रभाष्येऽनुसन्धेयः। जीवस्य चाणुत्वं श्रुत्याप्युक्तम् "एषोऽणुरात्मा चेतसा वेदितव्य" इति पद्यं चैतन्न श्रुतिः प्राचामनुल्लेखादुत्क्रान्त्यादिश्रुतिविरोधाच्च। तस्मादंशवाद एव वेदान्तिनां ज्ञेयः। "अंशो नाना व्यपदेशादि"ति सूत्रे भिन्नाभिन्नत्वस्य हेतुत्वकीर्त्तनात् सिद्धस्यैव हेतुत्वाच्च भिन्नाभिन्नत्वमेव जीवस्य प्राप्तं नत्वभिन्नत्वम्। "अम्बुवदग्रहणात्तु न तथात्वमि"ति सूत्रेण प्रतिबिम्बवादोऽपि निराकृत आचार्येण।

यदुक्तं जीवब्रह्मैक्यं वेदान्तानां विषय इति तन्न, वेदान्ते सर्गादिकारणस्यैव ब्रह्मणो विषयत्वाभिधानात् "अधीहि भगवो ब्रह्मे"ति शिष्यप्रार्थनायां "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद् ब्रह्म तद् विजिज्ञासस्वे"त्युक्तेः, "सोऽन्वेष्टव्यः, स विजिज्ञासितव्यः" "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इत्यादि श्रुतिभ्यः। "तत्तु समन्वयादि"ति न्यायाच्च। ब्रह्मात्मैक्यस्य जिज्ञास्यत्वाश्रवणाच्च। "अहं ब्रह्मास्मी"ति प्रत्ययश्च निरन्तरब्रह्मध्यानात् तन्मयताप्राप्तावुदेति, तथाच श्रुतिः—

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्"॥ इति

"मन्मया मामुपाश्रिता" इति स्मृतिः, "क्वचित् तद्भावनायुक्तस्तन्मयोऽनुचकार हे"ति श्रीभागवतं च। अथवा सुषुप्तिवत् समाधौ हृदिस्थोपास्यब्रह्मणैकीभावात् तथा प्रत्ययः, "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि"ति श्रुतेः, नचैतत् सुषुप्तिपरमिति दर्शितं सूत्रभाष्ये।

"आत्मभावं नयत्येवं तद्‌ब्रह्मध्यायिनं मुने।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा" ॥

इति विष्णुपुराणाच्च। योगिनोऽप्याहुः—तथाच योगियाज्ञवल्क्यः—

समाधिः समतावस्था जीवात्मपरमात्मनोः।
ब्रह्मण्यवस्थितिर्या सा समाधिः प्रत्यगात्मनः" ॥ इति

( क्रमशः )

---

# माणवक-गौरवम्

[ निबन्धकः—श्रीकाश्यपकविः ]

( पूर्वानुवृत्तम् )

## तृतीयाऽङ्कः

### प्रथमपटे

कात्यायनः—वयस्य हारीत ! संवृतं ब्रवीषि, तत नावधारयामि, विवृत्य स्पष्टं ब्रूहि, कथमशक्यः साम्प्रतं गुरुकुलवास इति।

हारीतः—यदि सत्यमेव नावधारयसि, तदा कथयामि श्रूयताम् ;—यावेतौ कियत्कालात् पूर्वं शिष्यभूयं गुरुणा प्रापितावारुणिरुपमन्युश्चेति बालौ, तयोः प्रभावात्।

कात्यायनः—कथमिव ?

हारीतः—किं न पश्यसि ?

यदा यस्मिन् कृत्ये घटयति गुरुस्तत्र सुतरां
चित्तश्रद्धावेतौ बहुनिपुणतामेव वहतः ।
सुशीघ्रं शास्त्रार्थो हृदि विकसितः कृत्यकृतिनो-
स्तयोर्जिज्ञासूनामपि विपुललज्जां वितनुते ॥

अपि च—बुद्धया दक्षतया तथा हृदि गुरोः पत्न्याश्च तस्यान्तरे
लोकानां प्रतिवेशिनामपि सदा प्रीतिं परां यच्छतः ।
तत्रास्माकमतिस्थिरं लयमगात् पूर्वं महद् गौरवम्
धिग्धिग् बालसतीर्थ्यशक्तिविजिताः किं नो विपद्यामहे ॥

कात्यायनः—वयस्य हारीत ! कथमनेनास्माकं महद् गौरवं लयमगादिति न सम्प्रधारयामि ।

हारीतः—वयस्य कात्यायन ! कापटिकोऽसि विधेयो वेति न निश्चेतुमर्हामि ।

कात्यायनः—कथमिव ?

हारीतः—यतः सुगममपि तत्त्वं परिपृच्छसि ? पश्य,—

यावत् सूर्यो दीप्तिमान् भाति शून्ये
तावत्तारा नैव दृश्या भवन्ति ।
यावच्चन्द्रो ध्वान्तहन्ता न रात्रौ
तावद् ध्वान्तं हन्ति खद्योतमाला ॥

तत् तत्र तावदिदानीमस्माभिः प्रस्थातव्यं यत्र तादृशां प्रतिभावतां लोकोत्तरेण प्रतिभानेन नोपहन्यते किलास्माकं प्रतिष्ठा ।

कात्यायनः—हारीत, किमु तावन्मात्रेणैव कारणेन गुरुकुलवासमशक्यं मन्यसे ?

हारीतः—नहि तावन्मात्रेणैव परमपरेणापि ।

कात्यायनः—किं वा तदपरम् ?

हारीतः—प्रत्यक्षापलापिन् ! श्रूयताम् ,—तद्धि सुदुष्करेषु कृत्यशतेषु निर्विवेकमनारतं गुरुणास्माकं नियोजनम् ! दृश्यतां तदा अस्मादृश मानुषशक्तिबाह्ये जलाशयसंस्कारव्यापारे प्रवर्त्तनमेव । येन गुरोः शापभयात् सुसम्पादितेनाद्य सुचिरकालात्ययेऽपि नापगता नः शरीरवेदना । द्वयोस्तु सतीर्थ्ययोः स्वशक्तिबाह्येन परिश्रमेण परिक्लिष्टयोः शरीरे सुतीव्रतापो ज्वर एव पदमधत्त । तदेवं प्रत्यहं सुदुःशकं गुर्वादेशानुगुणं कृत्यशतं कुर्वतामस्माकं सुघटितशरीरसन्धीनामपि नातिचिरं कीदृशी शोच्या दशा स्यादिति को वा जानाति । तत्

स्थानमेतत् परित्यज्य प्रस्थानं श्रेयसे हि नः ।
अखण्डितयशोजुष्टाः प्राणा येन सुरक्षिताः ॥

कात्यायनः—( स्वगतम् ) अहो हारीतस्य वृथैव यशोलिप्सा ! परोत्कर्षासहिष्णुता च ! तथाहि,—

गुणमल्पमपि स्वीयं बहुलायितमिच्छति ।
किं नु स्वीयगुणोत्कर्षैर्जेतारं नो जिगीषति ?

भवत्वेवं तावदिमं शमं लम्भयामि । ( प्रकाशं ) वयस्य हारीत, किमेवमकाण्डे विमनायसे ? पश्य ;—

दैवमेवानुवर्त्तन्ते सुखं दुःखं यशोऽयशः ।
यत्र गच्छसि तत्रैव समान्येतानि लप्स्यसे ॥

तत् किमिति वृथैव एतद्गुरुकुलत्यागमध्यवस्यसि ?

हारीतः—ननु भोः पुरुषकारप्रत्ययिता वयं नहि दैवं बहुमन्यामहे ।

कात्यायनः—धिक् शान्तं ! प्रगल्भ ! वह्निर्नाम शीत इति मूढैः सुनिश्चितोऽपि किमु दहनाद् विरमति ।

हारीतः—विश्वासान्ध ! अलं वस्तुभूतेन दहनस्वभावदृष्टान्तेन अवस्तुभूतस्य कल्पनामात्रसारस्य दैवस्य स्वभावनिरूपणेन । तदलमत्र मदीयाध्यवसायविघटनप्रयत्नेन ।

कात्यायनः—हा धिक्! हारीत! दृढं नास्तिक्यमनुबध्नासि। एवं किल नास्तिकवादेन स्वयमिव समाजः पतति। तद् विरमैतस्माद् अनर्थहेतोः प्रागल्भ्यात्।

हारीतः—पण्डितम्मन्य! नेदमीदृशम्! वयं पुनर्मन्यामहे पुरुषकारं लघूकृत्य दैवस्य प्राधान्याभ्युपगमेनैव समाजो विपर्यस्यति, नतु पुरुषकारतो दैवस्याधःकरकृत्या। तदलं विवादेन। यूयं यथाविज्ञानं कुरुथ, वयमपि स्वाभिमतं पन्थानं विशामः।

कात्यायनः—वयस्य हारीत! त्वं यथा तथा वा मन्यस्व, सौहार्देन पुनरपि कथयामि श्रूयताम्,—

अमर्षं मा कृथा मोहादुपमन्यौ तथारुणौ।
न हि तेन तयोर्हानिर्विन्देथा दुर्विधां स्वयम्॥

हारीतः—( स्वगतम् ) अहो! सुतरां सौहार्दवान् प्रत्ययिनश्च कात्यायनः खिद्यते निर्बन्धञ्च पुष्णाति। तदेवं यदि कष्टं सोढ़मेतावन्ति दिनानि, तदा कालान्तरमपि कथञ्चिदत्र समवस्थाय पश्यामि फलं गुरुतन्त्रतायाः!

कात्यायनः—वयस्य हारीत! अपि तूष्णीं कृत्यमवधारयसि?

हारीतः—अथकिम्।

कात्यायनः—अपि नाम निर्णयं गतोऽसि?

हारीतः—अथकिम्। वयस्यः कात्यायनः परं खिद्यते इति मदीयमध्यवसायं परित्यज्य तदीयमेव मतमनुप्रविशामि। तदेहि वयस्य कात्यायन! यावद् यथापूर्वं गुर्वर्थसाधनपरौ भवावः।

कात्यायनः—साधु वयस्य हारीत, साधु, सुतरां प्रीतोऽस्मि तवानेन सङ्कल्पेन। तदेहि गच्छावः। ( निष्क्रान्तौ )

( क्रमशः )

---

# श्रीचैतन्यचरितामृतसंस्कृतानुवादः

## श्रीश्रीचैतन्यचरितामृत आदिलीलायां

## सप्तदशः परिच्छेदः।

(पूर्वतोऽनुवृत्तः)

[ अनुवादकः—श्रीभास्करानन्दस्वामी ]

मम निन्दापराधिभ्यो नाहं भक्तिं ददामि चेत्।
न कथञ्चन ते सर्वे मद्भक्तिं लब्धुमीशते ॥
उद्धर्त्तुमहमायातो जातस्तस्य विपर्य्ययः।
एतेभ्यो दुर्जनेभ्यस्तु हितं केन भविष्यति ॥
यदा मां ते नमस्यन्तो भवन्ति क्षीणकल्मषाः।
तदैव लम्भितां भक्तिं लब्धुमर्हन्ति ते पुनः ॥
अवश्यमेव सन्न्यासं ग्रहीष्याम्यत एव हि।
ततः सन्न्यासिबुद्ध्या मां ते नमस्यन्ति निश्चितम् ॥
मामेवं नमतां तेषामपराधक्षयो भवेत्।
जनयामि ततो भक्तिं तथैषां निर्मले हृदि ॥
पाषण्डिनां तदैवैषां समुद्धारो भविष्यति।
नास्त्युपायान्तरं किञ्चिद् युक्तिसारोऽयमेव मे ॥
प्रभौ सुदृढ़युक्त्यैवं कृतबुद्धौ गृहस्थिते।
केशवो भारती स्वामी नवद्वीपं समागतः ॥२६०॥
प्रभुणा तं नमस्कृत्य कृतं भिक्षानिमन्त्रणम्।
तेनैवं ग्राहयन भिक्षां प्रभुस्तस्मै न्यवेदयत ॥
ईश्वरो हि भवांस्तावत साक्षान्नारायणो भवान।
करोतु कृपया देवः संसारान्मम मोचनम् ॥
भारतीस्वामिना प्रोक्तमन्तर्यामी त्वमीश्वरः।
यत कारयसि तत कुर्यां न ममास्ति स्वतन्त्रता ॥

इत्युक्त्वा भारतीस्वामी कण्टकं नगरं गतः।
सन्न्यासं परिजग्राह तत्र गत्वा महाप्रभुः॥
नित्यानन्दप्रभुश्चन्द्रशेखराचार्यसङ्गतः।
तथा मुकुन्ददत्तश्च तस्याकुर्वन सहायताम्॥
इत्येवमादिलीलायाः सूत्रं विरचितं मया।
श्रीवृन्दावनदासेन वर्णितैषा सविस्तरम्॥
यशोदानन्दनो भूत्वा श्रीशचीनन्दनः स्वयम्।
सम्यगास्वादयामास भक्तभावं चतुर्विधम्॥
राधाप्रेम-स्वमाधुर्य-रसास्वादनलोलुपः।
सम्यगङ्गीचकारासौ राधाभावं महाप्रभुः॥
गोपीभावं स एकान्तं यदा स्वीकृतवान स्वयम्।
व्रजेन्द्रनन्दनं कृष्णं निजकान्तममन्यत॥

सुदृढं दृश्यते ह्येतद् गोपीभावस्य लक्षणम्।
नान्यस्मिन स भवेद्भावो विना व्रजेन्द्रनन्दनम्॥२७०॥

गुञ्जमाली शिखापीड़ः किशोरः श्यामसुन्दरः।
गोपवेशस्त्रिभङ्गश्च मुरलीशोभिताननः॥
इत्याकारं यदि त्यक्त्वा कृष्णः स्याद्भिन्नविग्रहः।
कदाचिद् गोपिकाभावस्तत्-समीपं न गच्छति॥

"तथाहि ललितमाधवे षष्ठाङ्के चतुर्दशश्लोके विशाखावाक्यम्—
गोपीनां पशुपेन्द्रनन्दनजुषो भावस्य कस्तां कृती
विज्ञातुं क्षमते दुरूहपदवीसञ्चारिणः प्रक्रियाम्।
आविष्कुर्वति वैष्णवीमपि तनुं तस्मिन भुजैर्जिष्णुभि-
र्यासां हन्त चतुर्भिरद्भुतरुचिं रागोदयः कुञ्चति॥८॥"

रासलीलां मधौ कुर्वन कृष्णो गोवर्द्धने गिरौ।
सङ्केतं ज्ञापयन राधां तत्रैवान्तर्दधे स्वयम्॥

तस्मिंस्तत्र पथमुद्वीक्ष्य रहःकुञ्जमधिष्ठिते ।
सर्वास्तत्रागता गोप्यस्तदन्वेषणतत्पराः ॥
दूरात् कृष्णं समालोक्य प्रोक्तवत्यश्च ताः पुनः ।
व्रजेन्द्रनन्दनोऽयं भोः कुञ्जान्तर्दृश्यतामिति ॥
आयान्तीर्गोपिका दृष्ट्वा कृष्णः साध्वसमागतः ।
सङ्गोपयितुमात्मानं नाशक्नोद् भयविह्वलः ॥
ततश्चतुर्भुजां मूर्तिं गृह्णंस्तत्रैव स स्थितः ।
गोप्यः समीपमागत्य कृष्णं पश्यन्त्य ऊचिरे ॥
नायं कृष्णो भवेत्तावदयं नारायणः स्वयम् ।
इत्युक्त्वा तुष्टुवुः सर्वास्तं प्रणेमुश्च गोपिकाः ॥
नारायण नमस्तुभ्यं देव प्रसीद नः प्रति ।
विलोपय विषादं नः कृष्णसङ्गं समर्पय ॥
इत्युक्त्वा च नमस्कृत्य गोपिकासु गतास्वथ ।
राधा तत्र समायाता कृष्णस्याक्षिपथं गता ॥२८०॥
राधिकां वीक्ष्य कृष्णस्तु कौतुकं कर्त्तुमुद्यतः ।
तां स्वां चतुर्भुजां मूर्त्तिं संरक्षितुमचेष्टत ॥
राधिकायास्तु सान्निध्यान्निलीनं तद्भुजद्वयम् ।
कृत्वाप्यसौ बहून् यत्नान् रक्षितुं न शशाक तत् ॥
राधायाः शुद्धभावस्याचिन्तनीयप्रभावता ।
यः कृष्णं कारयामास द्विभुजं विग्रहं निजम् ॥

"तथाह्युज्ज्वलनीलमणौ श्रीरूपगोस्वामिवाक्यम्—
रासारम्भविधौ निलीय वसता कुञ्जे मृगाक्षीगणै-
र्दृष्टं गोपयितुं स्वमुद्धरधिया या सुष्ठु सन्दर्शिता ।
राधायाः प्रणयस्य हन्त महिमा यस्य श्रिया रक्षितुं
सा शक्याप्रभविष्णुनापि हरिणा नासीच्चतुर्बाहुता ॥६॥"

( क्रमशः )

---

# १८७७ शकाब्दीयसंस्कृत-साहित्य-परिषत्पत्रिकास्थ-विषयानुक्रमणी

(वर्णक्रमानुसारिणी)

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4. for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkaharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri. M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakra, varti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada-Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakra varti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakra varti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

Reg. No. C 1073

Vol. XXXIX. June 1956

No. 2 १८७८शकीये

३९श-वर्षस्य जैष्ठे

२य संख्या मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—1-4s

# विज्ञापनम्

## विशेषतोद्रष्टव्यम्

संस्कृतसाहित्यपरिषदो द्विषष्ट्यधिकत्रयोदशशततम ( १३६२ ) वङ्गाब्दीय-वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा (V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। अतःपरं यैस्तावदस्याः परिषदः सदस्यपदावस्थानं नेष्यते तैर्वयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्

१६८।१, राजा-दीनेन्द्रष्ट्रीट्,

संस्कृतसाहित्यपरिषद्-भवनम्, कलिकाता—४

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM.Kali pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

(Cont. to Cover 3rd Page)

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, ShyambazarCalcutta.

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXIX. No. 2 | १८७८-शकीये जैष्ठे ३९श-वर्षस्य २य-संख्या | June 1956.

## मतिमञ्जरी

### संस्कृतसाहित्यपरिषद्वृत्तम्

( २ )

ग्रन्थप्रकाशनमधिकृत्य परिषदः कृत्यं विशेषतः समुल्लेखयोग्यम् । परिषद्ग्रन्थप्रकाशविभागेन परिषद्ग्रन्थमालेति नाम्ना पञ्चविंशतिर्ग्रन्था अद्य यावत् प्रकाशिताः । तेषु कतिपये ग्रन्था भारतीय-प्राचीन-संस्कृते-स्तथा भारतीयेतिहासस्य नानाविधान्यज्ञातपूर्वाणि तथ्यानि प्रकाश्य विश्व-विद्वत्समाजे भूयांसमादरं लेभिरे । तत्तद्ग्रन्थभूमिकासु निबद्धाः सिद्धान्ता नानाप्रदेशीयपण्डितानां प्रमाणभूतग्रन्थेषु तैः सश्रद्धमभ्युपगताः । अनेके ग्रन्थाश्च विभिन्नविश्वविद्यालयेषु पाठ्यकोटौ सन्निवेशिताः ।

परिषद्ग्रन्थशालायामीदृशा बहवो ग्रन्था वर्त्तन्ते येषु प्रकाशितेषु भारतीयेतिहासस्य बहूनि तिमिरावृततत्त्वानि भास्वरेणालोकसम्पातेन प्रकाशमुपयास्यन्ति । प्राचीनविद्यायाः प्राचीनसंस्कृतेश्च विविधतथ्यानां संघटिष्यते सन्धानम् । तस्मात् सुतरामपेक्षितं ग्रन्थप्रकाशनविधौ वदान्यजनानां प्रभूतमानुकूल्यम् । परिषदो नाट्यविभागेनाद्य यावत्

परःशतान् वारान् नाना कवीनां प्राचीनानां नवीनानां च निपुणमभिनीतानि बहूनि संस्कृतनाट्यानि। अनन्यसामान्यं खलु संस्कृतनाट्याभिनये नैपुण्यं परिषदः सदस्यानाम्। वङ्गदेशाद् बहिरपि पाटलिपुत्रवाराणसीकर्णपुर-प्रभृतिस्थानेषु विभिन्नविद्वत्सम्मेलनसमवेताः पण्डिताः संस्कृतसाहित्य-परिषदो रूपकाभिनयसन्दर्शनेन सुतरां मुग्धा अभूवन्। रूपकप्रयोगा-वलोकनेन प्रवर्द्धते संस्कृतं प्रति लोकानामनुरक्तिः। परिषदभिनयदर्शनेन संस्कृतभाषां प्रति भृशमाकृष्टाः केचन प्रवयसोऽपि संस्कृताध्ययने प्रवृत्ताः संस्कृतविद्यायां प्रावीण्यमन्यादृशमध्यकार्षुरित्येतदपि दृष्टचरम्। अभिनय-विभागस्य सुष्ठुतया कृत्यसम्पादनाय परिषद्भवने यद्यपि निर्मितः कश्चन रङ्गमञ्चः, तथापि तत्र यावतामुपकरणानामपेक्षा तावन्ति द्रव्यदैन्येनैव नाद्यापि संगृहीतान्यभूवन्। तदर्थं वदान्यानां सानुक्रोशा दृष्टिरपेक्ष्यते।

संस्कृतसाहित्यपरिषदाख्यं परिषदो मासिकं मुखपत्रं गम्भीरार्थ-सम्वलितसंस्कृतनिबन्धसमृद्धं प्रतिमासं नियमेन प्रकाश्यते। संस्कृत-भाषामयमासिकपत्रेषु न तादृशं पुरातनं पत्रमद्यत्वे द्वितीयं समुपलभ्यते। एतत्पत्रिकाद्वारेणाद्य यावद् बहवो नूतनाः प्राचीनाश्च ग्रन्थास्तथा गवेषणा-मूलकबहुनिबन्धाश्च प्रकाशमलभन्त। पत्रिकायाः कलेवरवर्द्धनस्य शक्य-साधनत्वे कृत्यमिदं सुष्ठुतरं साधयितुं शक्यते।

परिषत्परिचालित-संस्कृतविद्यालये लब्धप्रतिष्ठा अध्यापका नियमेन शास्त्राध्यापनायां व्यापृताः सन्ति। प्राचीने काले विद्यार्थिनां सततमाचार्य्य-सन्निधाने निवास एवासीद् विशेषः। परिषत् पुनरिदानीं मासिक-वृत्तिप्रदानेन नालं भवति विद्यार्थिनामाहारवासस्थानयोः सुप्रबन्धं कर्त्तुम्। तत एव तद् वस्तु सुदूरापेतम्।

परिषदो मासिकसभाधिवेशने विशेषविदः कोविदाः संस्कृतभाषा-निबद्धं गवेषणामूलकनिबन्धनिचयं पठन्ति, सुविख्याता निपुणव्याख्याता-रश्च शास्त्रव्याख्यां कुर्वन्ति। परन्तु नवनिर्मितपरिषद्भवने बहुलजनोपयुक्त-स्थानासनादिव्यवस्था न शक्यते द्रव्याभावेन साधयितुम्।

परिकल्पनानुरूपं परिषद्भवनमद्यापि न सम्पूर्णम्। द्वितीयतल-पर्य्यन्तमिदमंशतो निर्मितमिति सत्यं किन्तु तदर्थमेव परिषदियमृण-भाराक्रान्ता समजनिष्ट। परिषद्भवने प्रत्यहं बहवः पण्डिताः समवेता भवन्ति परमल्पतया स्थानस्य ते स्वच्छन्दतो नालं भवन्ति स्वकृत्यानि निष्पादयितुम्। नाट्याभिनय-ग्रन्थागारव्यवहार-शास्त्रव्याख्यान-मासिक-सभाद्यधिवेशन-साधारणकृत्यकलापसम्पादनादिव्यापारार्थम् प्रभूतमपेक्षितं स्थानम्। अधमर्णतां विघटय्य त्वरया निर्मातव्यं तृतीयं तलं भवनस्य। तथा सुसम्पादयितव्यं परिकल्पनानुरूप्येण परिषद्भवनम्। तदिदं सर्वं न स्वल्पजनसाहायकेन शक्यसाधनमिति परिषदियं दीना विहिताञ्जलि-बन्धा समपेक्षते तत्र सर्वत्र सकरुणमवधानं संस्कृतकल्याणकामिनां समेषा-मिति शम्।

महामहोपाध्याय-श्रीकालीपदतर्काचार्य्येण

परिषत्सहसभापतिना प्रचारितम्

---

# श्रीचैतन्यचरितामृतसंस्कृतानुवादः

## श्रीश्रीचैतन्यचरितामृत आदिलीलायां

### सप्तदशः परिच्छेदः।

(पूर्वतोऽनुवृत्तः)

[ अनुवादकः—श्रीभास्करानन्दस्वामी ]

सोऽयं व्रजेश्वरो नूनं जगन्नाथः पिता पुनः।
सा च व्रजेश्वरी साक्षाच्छचीदेवी प्रसूरियम्॥
स्वयं नन्दसुतः सोऽयं श्रीचैतन्यमहाप्रभुः।
असौ श्रीबलदेवश्च नित्यानन्दोऽयमग्रजः॥
दास्यं सख्यञ्च वात्सल्यमिति भावत्रयात्मकः।
नित्यानन्दप्रभुः सोऽयं कृष्णचैतन्यसङ्गतः॥

जगतीं प्लावयामास प्रेमभक्तिं समर्पयन् ।
नैव तस्य चरित्राणि बोद्धुमर्हन्ति मानवाः ॥
अद्वैताचार्यगोस्वामी भक्तावतार एव सः ।
भक्तिं प्रचारयामास कृष्णमेषोऽवतारयन् ॥
सख्यं दास्यमिति द्वौ च भावौ तस्य स्वभावजौ ।
आचचार प्रभुस्तस्मिन गुरुव्यवहृतिं क्वचित् ॥
श्रीवासाद्याश्च यावन्तो भक्ता आसन् महाप्रभोः ।
ते पुनः स्वस्वभावेन श्रीचैतन्यं सिषेविरे ॥२६०॥
गोस्वामिपण्डितादीनां यो यः स्वाभाविको रसः ।
तेन तेन रसैनैव प्रभुस्तेषां वशं गतः ॥
मुरलीवदनः श्यामकान्तिर्गोपविलास्यसौ ।
गौरकान्तिरयं जातु सन्न्यासी वा द्विजोत्तमः ॥
गोपीभावमुरीकुर्वन्नत एव प्रभुः स्वयम् ।
व्रजेन्द्रनन्दनं स्वस्य प्राणनाथमवोचत ॥
यः कृष्णः सैव गोपीति विरोधः परमो ननु ।
अचिन्त्यं प्रभुचारित्रमतिदुर्बोधमुच्यते ॥
अत्र प्रतीपतर्केण संशयीत न कश्चन ।
कृष्णस्याचिन्त्यशक्तित्वात् सर्वं तत्रैव युज्यते ॥
कृष्णचैतन्यलीलासावचिन्त्या परमाद्भुता ।
चित्रा भावा गुणाश्चित्राश्चित्राण्याचरणानि च ॥
यस्तर्केण दुराचारो मतमेतन्न मन्यते ।
तस्य नास्त्येव निस्तारः कुम्भीपाके स पच्यते ॥

"तथाहि भक्तिरसामृतसिन्धौ स्थायिभावलहर्यामूनपञ्चाशत्तमाङ्कधृत-प्रभासखण्डवचनम्—

अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।
प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम् ॥१०॥"

चैतन्याद्भुतलीलायां विश्वासो यस्य वर्त्तते ।
चैतन्यश्रीपदप्रान्तं स एव प्रतिपद्यते ॥
सर्वसिद्धान्तसारोऽयं कथितोऽत्र प्रसङ्गतः ।
आकर्णयति य एतं शुद्धभक्तिं स विन्दति ॥
मया चेल्लिखितो ग्रन्थः संक्षेपात् पुनरुच्यते ।
ग्रन्थार्थस्य तदा तस्य रसास्वादोऽनुभूयते ॥३००॥
ग्रन्थे भागवते दृष्टं व्यासस्याचरणं तथा ।
कथयित्वा कथां व्यासः संक्षेपात् पुनरुक्तवान् ॥
आदिलीलापरिच्छेदा गण्यन्तेऽत्र ततो मया ।
प्रथमे हि परिच्छेदे मङ्गलाचरणं कृतम् ॥
द्वितीये कृष्णचैतन्यतत्त्वस्य च निरूपणम् ।
व्रजेन्द्रनन्दनः कृष्णो य एव भगवान् स्वयम् ॥
स एव कृष्णचैतन्यः श्रीशचीनन्दनः प्रभुः ।
तृतीये जन्मनस्तस्य कृतं सामान्यलक्षणम् ॥
नामप्रेम्णोश्च कृष्णस्य प्रचारो युगधर्मयोः ।
विशेषकारणं तस्य प्रेमदानं तदन्तरा ॥
चतुर्थे जन्मनस्तस्य प्रोक्तं मूलप्रयोजनम् ।
आस्वादनं स्वमाधुर्यप्रेमानन्दरसस्य च ॥
नित्यानन्दस्य तत्त्वञ्च पञ्चमेऽत्र निरूपितम् ।
रोहिणीनन्दनो रामो नित्यानन्दोऽभवत् प्रभुः ॥
विचारोऽद्वैततत्त्वस्य षष्ठे च विवृतो मया ।
अवतारो महाविष्णोरद्वैताचार्य इत्ययम् ॥
व्याख्यानं पञ्चतत्त्वानां परिच्छेदे च सप्तमे ।
मिलितैः पञ्चभिस्तत्त्वैः प्रेमदानं कृतं यथा ॥
कृष्णचैतन्यलीलाया वर्णनार्थमथाष्टमे ।
एकस्य कृष्णनाम्नो हि माहात्म्यं कथितं महत् ॥३१०॥

भक्तिकल्पमहावृक्षो वर्णितो नवमे मया ।
चैतन्यमालिकेनैष वृक्ष आरोपितो यतः ॥
मूलस्कन्धस्य शाखानां गणना दशमे कृता ।
सर्वाभिः खलु शाखाभिर्यथा फलसमर्पणम् ॥
नित्यानन्दस्य शाखानां वर्णनैकादशे पुनः ।
अद्वैतस्कन्धशाखानां विवृतिर्द्वादशे कृता ॥
कृता महाप्रभोर्जन्मविवृतिश्च त्रयोदशे ।
यथा जन्माभवत्तस्य कृष्णनाम्ना समं प्रभोः ॥
संक्षेपाद्वर्णिता तस्य बाल्यलीला चतुर्दशे ।
तथा पञ्चदशे लीला पौगण्डस्य प्रदर्शिता ॥
कृतः कैशोरलीलायाः समुद्देशश्च षोड़शे ।
तस्य यौवनलीला च प्रोक्ता सप्तदशे मया ॥
आदिलीलाप्रबन्धेऽस्मिन् विधाः सप्तदशेरिताः ।
ग्रन्थस्य मुखबन्धश्चाप्रथमाद्द्वादशावधिः ॥
पञ्चानां वयसां तस्य चरितं शेषपञ्चके ।
संक्षेपेण मया प्रोक्तं नातिविस्तृत्य वर्णितम् ॥
श्रीवृन्दावनदासेन कृतं चैतन्यमङ्गले ।
श्रीनित्यानन्दनिर्देशबलेनैतत् सविस्तरम् ॥
कृष्णचैतन्यलीलेयमनन्ता परमाद्भुता ।
ब्रह्मा शिवश्च शेषश्च यस्या अन्तं प्रयान्ति न ॥३२०॥
योऽंशं कञ्चन लीलानां कथयेच्छृणुयादथ ।
स धन्यः कृष्णचैतन्यमचिरादेव विन्दति ॥
कृष्णचैतन्यमद्वैतं नित्यानन्दं नमाम्यहम् ।
भक्तान् श्रीवासमुख्यांश्च श्रीगदाधरवर्यकान् ॥
यावन्तः सन्ति भक्ताश्च श्रीवृन्दावनवासिनः ।
नम्रेण शिरसा तेषां गृह्णामि श्रीपदाम्बुजम् ॥

श्रीस्वरूपस्य रूपस्य श्रीसनातनजीवयोः ।
श्रीरघुनाथदासस्य श्रीमत्पादाम्बुजान्यहम् ॥
शिरसा धारयन् वन्दे नित्यमाशां वहन् हृदि ।
इत्याह कृष्णदासः श्रीचैतन्यचरितामृतम् ॥

इति श्रीचैतन्यचरितामृत आदिखण्डे यौवनलीलासूत्रवर्णनं नाम सप्तदशः परिच्छेदः । इत्यादिलीला समाप्ता ।

---

# श्रीचैतन्यचरितामृत आदिलीलायां

## दशमपरिच्छेदे

### ३८ श्लोकात् परं योजनीयाः

### त्रुटितांशाः

---

श्रीवासुदेवदत्तो हि प्रभोर्भृत्यो महाशयः ।
यद्‌गुणा नैव कथ्येरन् सहस्रेण मुखैरपि ॥३९॥
यावन्तो भुवने जीवास्तेषां पापानि यः स्वयम् ।
गृहीत्वा नरकं भोक्तुमैच्छत्तान् रक्षितुं ततः ॥४०॥
शाखान्याद्भुतचारित्रो हरिदासो हि ठक्कुरः ।
अभङ्गेनाजपन्नाम प्रत्यहं यस्त्रिलक्षशः ॥
तस्यानन्ता गुणा आसन् दिङ्मात्रं कथ्यते मया ।
यं भोजयितुमाचार्यः श्राद्धपात्रं न्यवेदयत् ॥
प्रह्लादस्येव तस्यासीत् सर्वभक्तगुणावली ।
यवनैस्ताड्यमानोऽपि नाक्षुभ्यद् यो मनागपि ॥
तस्य सिद्धौ मृतं देहं क्रोड़े कृत्वा महाप्रभुः ।
महाकौतूहलाक्रान्तो मुहुर्नर्त्तितवान् स्वयम् ॥
श्रीवृन्दावनदासेन तस्य लीलाः सुवर्णिताः ।
अवशिष्टास्ति या काचिदग्रे सा वक्ष्यते मया ॥

उपशाखाश्च तस्यैव कुलीनग्रामवासिनः ।
सत्यराजादयस्तस्य कृपाभाजनतां गताः ॥
मुरारिगुप्तनामासौ गुप्तप्रेमधनालयः ।
यद्दैन्यं श्रृण्वतो नूनं गलितं हृदयं प्रभोः ॥
अप्रतिग्राहकः सोऽयं न कस्याप्यादद‍े धनम् ।
कृतवानात्मवृत्त्यैव कुटुम्बप्रतिपालनम् ॥
यश्चिकित्साश्चकारासौ सदा सदयमानसः ।
देहव्याधि-भवव्याधी उभौ तस्य क्षयं गतौ ॥
श्रीमान मुरारिसेनोऽयं श्रीप्रभोः सेवकोत्तमः ।
नान्यत् किमप्यजानात स चैतन्य-चरणौ विना ॥५०॥
श्रीगदाधरदासो हि शाखा सर्वोपरि स्थिता ।
यवनप्राड्विवाकैर्यो हरिध्वनिमकारयत् ॥
श्रीशिवानन्दसेनोऽसौ प्रभोरान्तर-किङ्करः ।
सर्वे प्राप्तुं प्रभोः पादौ तस्य साहाय्यमाश्रयन ॥
प्रभोर्गणान समादाय पथि तांश्च सुपालयन् ।
नीलाचले प्रभुस्थानं सोऽगच्छत् प्रतिवत्सरम् ॥
साक्षाद्रूपन्तथावेशरूपाविर्भावरूपके ।
इत्येवं त्रिविधैः रूपैः स्वभक्तान दयते प्रभुः ॥
निर्विशेषं समैक्षन्त भक्ताः साक्षान्महाप्रभुम् ।
आवेशो नकुलब्रह्मचारिदेहेऽभवत प्रभोः ॥
प्रदुम्नब्रह्मचारीति नाम तस्याभवत पुरा ।
नृसिंहानन्द इत्याख्यां तस्मै पश्चाद्ददौ प्रभुः ॥
आविर्भावोऽभवत्तस्मिंश्चैतन्यस्य महाप्रभोः ।
वहवोऽलौकिका भावा एवमेवाभवन प्रभोः ॥
एतान सेनशिवानन्दः सर्वानास्वादयद्रसान् ।
सर्वमानन्दवृत्तान्तमग्रे वक्ष्ये सविस्तरम् ॥

शिवानन्दोपशाखा हि तद्भृत्यतनुजादयः ।
सर्वे परिकरास्तस्य कृष्णचैतन्यकिङ्कराः ॥
तनयास्तस्य चैतन्यदासोऽथ रामदासकः ।
तृतीयः कर्णपूरश्च भक्तशूरास्त्रयो मताः ॥६०॥
श्रीमान वल्लभसेनश्च सेनश्रीकान्त इत्यपू ।
शिवानन्दस्य सम्पर्कात् प्रभावेकान्तभक्तिकौ ॥
गोविन्दानन्द इत्याख्यो महाभागवतः प्रियः ।
प्रभोर्गोविन्ददत्तश्च प्रियः कीर्त्तनगायकः ॥
श्रीमान विजयदासाह्वः कीर्त्तनाक्षरिकः प्रभोः ।
नानाग्रन्थाँल्लिखित्वासौ प्रभवे प्रददौ पुरा ॥
उपनाम चकारास्य रत्नबाहुरिति प्रभुः ।
प्रभोरकिञ्चनो भृत्यः कृष्णदासाभिधानकः ॥
रम्भावल्कल-विक्रेता श्रीधरः प्रियकिङ्करः ।
परिहासं प्रभुर्नित्यं येन सार्द्धं समाचरत् ॥
रम्भापुष्पफलादीनि यस्माज्जग्राह चान्वहम ।
छिद्रितायसपात्रेण यस्य वारि पपौ प्रभुः ॥
प्रभोः प्रियतमो दासो भगवान्नाम पण्डितः ।
श्रीकृष्णोऽधिष्ठितः पूर्वं यस्य पूत-कलेवरम् ॥
पण्डितो जगदीशश्च हिरण्यश्च महाशयः ।
दयामयः प्रभुर्बाल्ये करुणां कृतवान ययोः ॥
याचन श्रीविष्णुनैवेद्यमेकादश्यां तिथौ प्रभुः ।
उभयोरेतयोर्गेहे स्वयं भक्षितवान् मुदा ॥
प्रभोरन्तेवसन्तौ द्वौ पुरुषोत्तम-सञ्जयौ ।
वैयाकरणशिष्याणां वरेण्यौ तौ महाशयौ ॥७०॥
पण्डितो वनमालीति शाखासौ लोकविश्रुता ।
या ददर्श प्रभोर्हस्ते हैमे मुषललाङ्गले ॥

श्रीवुद्धिमन्त-खानाख्यः श्रीचैतन्यस्य सुप्रियः ।
सेवकानामसौ मुख्यस्तस्याज्ञापालकः सदा ॥
पण्डितो गरुड़ो नाम श्रीनाममङ्गलाश्रयः ।
असौ नामबलेनैव विषशक्तिमपाहरत ॥
श्रीगोपीनाथसिंहाह्वः श्रीचैतन्यस्य किङ्करः ।
उक्तवान परिहासार्थं यमक्रूर इति प्रभुः ॥
देवानन्दस्तथा वक्रेश्वरो भागवताश्रितौ ।
भागवतस्य भक्त्यर्थं प्रापतुः कृपया प्रभोः ॥
ये तु श्रीखण्ड-वास्तव्या मुकुन्दो रघुनन्दनः ।
नरहरिश्चिरञ्जीवस्तथैव श्रीसुलोचनः ॥
ते च सर्वे महाशाखाश्चैतन्यानुग्रहाश्रिताः ।
प्रेमपुष्पफलान्येते व्यतरन यत्र तत्र च ॥
सत्यराजस्तथा रामानन्दश्च यदुनाथकः ।
पुरुषोत्तम इत्याख्यो विद्यारत्नाख्यशङ्करः ॥
श्रीवाणीनाथवस्वाद्याः कुलीन-ग्रामवासिनः ।
चैतन्य-जीवनाः सर्वे श्रीचैतन्यस्य किङ्कराः ॥
कुलीनग्रामवास्तव्यः कुक्कुरोऽपि मम प्रियः ।
तत्रत्यानां मनुष्याणां का कथेत्यवदत प्रभुः ॥८०॥
कुलीनग्रामसौभाग्यं व्यक्तं वक्तुं न शक्यते ।
कृष्णं गायति नीचोऽपि शूकरांश्चारयन् वने ॥
श्रीमाननुपमः ख्यातौ श्रीरूपश्रीसनातनौ ।
तिस्रः शाखा हि वृक्षस्य पश्चिमाः सकलोत्तमाः ॥
तत्र शाखे महत्यौ द्वे श्रीरूपश्रीसनातनौ ।
उपशाखा ह्यनुपमजीवराजेन्द्रमुख्यकाः ॥
ते द्वे शाखे अवर्द्धेतां मालाकारस्य वाञ्छया ।
ते वृद्धे पश्चिमं देशं समग्रं व्याप्नुतां क्रमात् ॥

ते आसिन्धुनदीतीरं तथैवाहिमपर्वतम् ।
वृन्दावनं तथा देशान मथुरादींश्च सर्वतः ॥
ते च प्रेमफलैः सर्वान समाच्छादयतां ततः ।
लोकाः प्रेमफलास्वादं लब्ध्वोन्मत्तहृदोऽभवन ॥
आसन् मूढ़ा अनाचारा मनुजास्तत्र पश्चिमे ।
ताभ्यां भक्तिसदाचारौ द्वाभ्यां तत्र प्रचारितौ ॥८७॥

---

# माणवक-गौरवम्

[ निबन्धकः—श्रीकाश्यपकविः ]

( पूर्वानुवृत्तम् )

## तृतीयाऽङ्के

द्वितीयदृश्यपटे

ततः प्रविशति गीतं गायन् आरुणिः

गीतम्

हे गुरुदेव पदं तव वन्दे
कुरु करुणां मयि विरलानन्दे
तिमिरशतावृत-मानसभवने दीपय दीपं दुष्कृतशरणे
नाशय पापं हापय तापं येन शिवं भुवि बहुलं विन्दे ।
त्वं मम तातः स्नेहनिधानं त्वमपि च जननी शिवशतशरणम्
तव पदलाभात सफलं जननं वितर कृपां मयि सततं मन्दे ॥

'जयन्ति नः श्रीगुरुपादरेणवः' । आदिष्टोऽस्मि भगवता कुलपतिना, आश्रमात सुदूरे स्थितं भुवि नन्दनायमानं चैत्ररथं नाम काननं समुपेत्य तस्मात् विचित्राणि पूजाकुसुमानि समाहरेति । तदिदं तदुद्यानं यावत

प्रविशामि। अनुदित एव सूरे प्रतिगन्तव्यमाश्रमपदमिति गुर्वादेशः, तदतिसत्वरमत्र पुष्पाण्याहरामि। एष पश्चिमान्ते समवतीर्णः सुधादीधितिरद्यापि सुधाकिरणशेषैरवभासयत्यम्बरतलम्! तत् प्रविशामि। ( प्रवेशं नाटयित्वा ) अहो रमणीयता काननस्य!

एते गुच्छमयैश्चिताः स्वकुसुमैः सप्तच्छदाः पादपा
एते रक्तसितैर्वृताश्च कुसुमैः शेफालिकाशाखिनः।
नानावर्णविचित्रपुष्पनिकरैरन्ये चिता भूधराः
पुष्पाणां हसितेन किं नु रजनी मोदं तनोति स्वकम्॥

अपिच— द्विरेफसंघा मधुपानमत्ताः
प्रतिप्रसूनं परितो भ्रमन्तः।
संशृण्वतां श्रोत्रसुखं सृजन्तः
पुष्पप्रकर्षानिव बोधयन्ति॥

भवतु, कृत्यमारम्भयामि। ( क्रमेण कुसुमान्याहरन् परिक्रामति ) अहो सन्निहिते लताकुञ्जे प्रभूतानि पुष्पाणि सन्दृश्यन्ते, तत् पूर्वमेतानि समाहरामि। अथवा ऊर्द्ध्वंगतान्येनानि कथमासादयिष्ये? आं दृष्टम्! एतेषामधस्तादेषा सुदृढा शाखा दृश्यते, एतामाकृष्य पुष्पाणि नमयित्वा सुखेन सञ्चिनोमि! ( आकर्षति ) हा हा भुजगेन दष्टोऽस्मि। हा हा हतोऽस्मि मन्दभाग्यः! हा गुरो! क्वासि ( विषवेगं नाटयन् पतितः ) हा गुरो! एष ते शिष्यजनो दूरे विपद्यते! हा नात्र कश्चिदपि? अहह! असह्यो विषवेगः! हा तात! हा मातः! क्व नु युवां तिष्ठथः? न ज्ञातुमर्ह्यर्हथः सहसैव दैवोपनतां पुत्रविपत्तिम्! अहह असह्या ज्वाला! हा गुरो! क्वासि? हा गुरो! ( विषवेगं नाटयन् स्थितः )।

ततः प्रविशति कात्यायनः

कात्यायनः—आदिष्टोऽस्मि भगवता कुलपतिना, यथा वत्स, कात्यायन, एष बाल आरुणिरेकाकी कुसुमाहरणाय मया चैत्ररथोद्याने प्रेष्यते। तत त्वमपि रहस्यमेनमनुसरन्नवेक्षस्व यथा नायमेकाकी भीतिं विपदं

वा काञ्चिद् विन्देत! अहो कुलपतेः शिष्येषु परुषपेलवता! य एषः—

पुष्पार्थं बालमेकं निदिशति गहने दूरसंस्थे निशायां
तद्रक्षार्थं रहस्यं समसमयमिमं मां न्ययुङ्क्ताकुलात्मा।
गूढं तत्त्वं गुरोर्मे सुनिपुणमनसा ये न पश्यन्ति मूढाः
तेषामेव प्रकामं प्रतिदिवसमसौ भासते क्रूरचेताः॥

भवतु तावदिदं चैत्ररथमुद्यानम्! क्षणात् पूर्वमारुणिरत्र प्रविष्टः, तद् यावदहमपि तेनासंविज्ञातः प्रविशामि। ( उद्यानप्रवेशं नाटयति )।

आरुणिः—हा गुरो! क्वासि? अहह! ज्वलन्तीव मे सर्वाङ्गानि! हा गुरो!

कात्यायनः—अये! क एष कातरो रौति?

आरुणिः—अहह! दुःसहो विषवेगः! हा हा! नात्र मे मन्दभाग्यस्य सहायः कोऽपि!

कात्यायनः—( सोद्वेगम् ) अये! किमिदमत्याहितम्! आरुणिरेष दुःसहं विषवेगं ब्रवीति! वयस्य आरुणे? किं ब्रवीषि? एषोऽहं कात्यायनस्ते सहायोऽस्मि!

आरुणिः—आः! आर्य्यकात्यायनः! आर्य्य कात्यायन! किमिदानीं भवता सहायेन? एषोऽहं कालसर्पेण दष्टोऽस्मि! तदेहि धारय माम्।

कात्यायनः—वयस्य! एषोऽस्मि, एहि ममाङ्कमधिष्ठाय स्वस्थो भव। ( अङ्के स्थापयित्वा ) वयस्य! कथं मन्यसे?

आरुणिः—आर्य्य कात्यायन! सुदुःसहो विषवेगः! न सोढुमर्हामि!

कात्यायनः—अये! एष आरुणिः सुदुःसहं विषवेगं ब्रवीति! तत् किं करोमि? हा गुरो! क्वासि? वृथैव त्वं कात्यायनं सहायमादिश्य निरातङ्कम् आश्रममधितिष्ठसि! हा गुरो! समेत्य पश्य, एष ते प्रियतमः शिष्य आरुणिः कालसर्पेण दष्टो विपद्यते! अहह! किं करोमि? क गच्छामि? कं वा निर्जनेऽस्मिन्नरण्ये शरणं

व्रजामि ? ( विचिन्त्य ) अथवा किमन्यत्, एनमकालहीनं गुरोः सन्निधिं प्रापय्य निश्चिन्तो भवामि । स एवास्य यथाकालं प्रतीकारमुपदेक्ष्यति !

आरुणिः—आर्य्य कात्यायन !

मरणे नियते जन्तोस्तन्मां दहति केवलम् ।
म्रिये यत् पुण्यमद्याहं गुरुदिष्टमपालयन् ॥

गुरुर्मदर्थं भवतानुनेयो वाच्यश्च यत्नं मम तस्य कृत्ये ।
नासिद्धिदोषः पुरुषस्य दोषाद् विधिर्विरोधं विदधे प्रकामम् ॥

हा गुरो ! हा प्रत्यक्षदैवत !

नालं साधयितुं दैवात्त्वदाज्ञामिह जन्मनि ।
जन्मान्तरेऽपि शिष्यत्वं तवायं याचते ततः ॥

कात्यायनः—वयस्य आरुणे ! अलमाशङ्कया ; एषोऽहं त्वां निमेषमात्रेण गुरोः पादोपान्तं प्रापयामि । येन गुरुपादरजःस्पर्शप्रभावेण सत्वरमेव स्वस्थो भवितासि ।

आरुणिः—आर्य्य कात्यायन ! एवं कृते वयस्यकृत्यमखण्डमनुष्ठितं भवति । तदविलम्बितमेवं क्रियताम् ।—

गुरुवन्दनया ततः कृती
यदि जीवामि गुरोः समीक्षया ।
यदि वा मरणं समाश्रये
ननु निःश्रेयसमेव मे भवेत् ॥ ( मूर्च्छति )

कात्यायनः—( स्वगतम् ) अहो ! गुरुभक्तिरारुणेर्वयस्यस्य ! ( प्रकाशं ) वयस्य ! आरुणे मा भैषीः, नूनमेषा गुरुभक्तिरेव त्वां सर्वापदो मोचयिष्यति ! तदेहि यावत्त्वां स्कन्धेन वहन् गुरुसमीपं प्रापयामि । ( निरूप्य ) अये ! आरुणिरचेतनो दृश्यते ! तत् किन्नु खलु स्यात् ? आरुणे ! आरुणे ! किमेवं भवसि ? आरुणे ? देहि मे प्रतिवचनम् ! हा हा ! सुतरां विलुप्ता संज्ञा !

हा वयस्य आरुणे ! गुरोः पादपरागमस्पृशन्नेव प्राणैर्वियुज्यसे ! हा वयस्य ! किमिदमनुरूपं त्वदीयशीलसौभाग्यसम्पदाम् ? वयस्य उत्तिष्ठ, यावत् सहैव गुरुपादसमीपमुपसर्पावः ! अहह ! आरुणेरनवशेषं चेतना लुप्ता ! अपि नाम अपुनरावृत्तये लुप्ता ? यद्येवं हा हतोऽस्मि मन्दभाग्यः ! अहह ! वयस्य आरुणे ! उत्तिष्ठ, देहि प्रतिवचनम् ! अन्यथा तवैव संरक्षणार्थं गुरुणा प्रेरितः कथमहमेकाकी तत्समीपमलज्जो गमिष्यामि ? हा हा अशरणोऽस्मि ! भगवति ! वनदेवते ! किन्तु त्वमपि निष्ठुरासि ? बालमेनं नियतमस्खलितब्रह्मचर्य्यं गुरुभक्तमसहायं विपद्यमानमवेक्षमाणायास्तवापि नान्तःकरणं दयते ? भगवति ! प्रसीद, दर्शय कृपया तादृशीमोषधिं यया क्षणमात्रेणैव वयस्यमारुणिं प्रशान्तविषवेगं समुज्जीवयामि ! आरुणे ! आरुणे ! उत्तिष्ठ वयस्य ! कथमेवमचेतनस्तिष्ठसि ? अथवा कुतोऽद्यापि आरुणेर्जीवनाशा ! हा हा !

विनयो मूर्त्तिमानेष दौर्भाग्यान्नो गतो दिवम् ।
अङ्कुरोद्गममात्रेण हा हा पुण्यतरुर्हतः ॥

तत् किं करोमि ? कं शरणं व्रजामि ? को मे वयस्यं मृत्युमुखात् संरक्षिष्यति ? ( स्मृत्वा ) आं दृष्टम् ! एष प्राप्तकालं मृत्युविजयिनं मृत्युञ्जयशिवमन्त्रं जपामि । कुतः खल्वापः ? आं ! इदं पत्रान्तगलितं नीहारजलं मन्त्रेण पावयित्वा तेनैव पूतो भवामि । ( तथा कृत्वा आसनं बद्ध्वा मन्त्रं जपन् स्थितः ) ( नेपथ्ये—'अले सट्ठिए ! इध उज्जाणे बहवो क्खु सप्पा होन्ति, ता इध ज्जेव पविसह्म' ! 'णं एव्वं भोदु' )

( नेपथ्ये आहितुण्डिकः वंशीं वादयति )

ततः प्रविशति भार्य्यया सह आहितुण्डिकः

आहि—अले सट्ठिऐ ! इध उज्जाणे बहवो सप्पा होन्ति, अवि अप्पहादे

जीविआए पूलणत्थं इदोतदो दे गदागदं कलेन्ति। ता दाणिं एत्थ पविसिअ सप्पाणं सुहं संगहं कलिअ हारीदसूस बन्धणसूस सप्पविसं दइअ अत्थं गेहिसूसं।

भार्य्या—णाध! णं पुच्छेमि, हारीदसूस ब्रह्मणसूस सप्पविसेण किं कज्जं?

आहि—मुद्धे! किं अह्माणं ताए चिन्ताए। अह्माणं दलिद्दाणं अत्थेण प्पत्तअणं। ता तं ज्जेव चिन्तेहि।

भार्य्या—एव्वं भोदु। ( उभौ प्रविशतः )

आहि—( निरूप्य ) अले! अप्पमादं गच्छेहि!

भार्य्या—एव्वं कलेमि।

आहि—अले एसो को वि सप्पो इदो तदो संचलेदि। ता इध चिट्ठ, जाव हगे इमं गेह्णिअ पेड़अगदं कलेमि!

भार्य्या—अले एसो आआलेहिं प्पआलेहिं अ तिक्खविसो पड़िहादि, ता अप्पमत्तेण गहिदव्वो!

आहि—कुडुम्बिणि! मा भाआहि! हगे जिण्णविसो णाम आहितुण्डिओ! ता तुमं णिउणं वंसीए सद्दं कलेहि।

भार्य्या—एव्वं कलेमि। ( वंशीं वादयति )

आहि—( निरूप्य ) एसो पलिक्कमदि! एसो चिट्ठति! एसो उण पलिक्कमदि! एसो णं पूव्वसलीलं उट्ठाविअ ट्ठिदो। ता एसे हगे गेह्णामि। ( गृह्णन् दंशनं सूचयित्वा ) अलेले! दट्ठो ह्मि एदिणा! अल तिक्खविसो ज्जेव एसो। ता आअच्छ ले!

भार्य्या—अले अप्पमत्तो धालेहि। मा णाम विस्सज्जेहि।

आहि—एव्वं ता सिग्धं पलिआलं कलेहि।

( क्रमशः )

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4- for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkabarya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhãttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri- M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakra, varti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada-Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

24.6.57

Reg. No. C 1073

Vol. XXXIX. October 1956

No. 6 १८७८शकीये

३९श-वर्षस्य आश्विने

६ष्ठ-संख्या मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—1-4as

# विज्ञापनम्

## विशेषतो द्रष्टव्यम्

संस्कृतसाहित्यपरिषदो द्विषष्ट्यधिकत्रयोदशशततम ( १३६२ ) वङ्गाब्दीयं वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं, तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा (V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। अतः परं यैस्तावदस्याः परिषदः सदस्यपदावस्थानं नेष्यते तैर्वयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्

१६८।१, राजा-दीनेन्द्रष्ट्रीट्,

संस्कृतसाहित्यपरिषद्-भवनम्, कलिकाता—४

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

(Cont. to Cover 3rd Page)

Printed by Bishnupada Bhattacharya M.A. Kabyatirtha. at Calcutta Oriental Press Private Ltd., 9, Panchanan Ghose Lane, Calcutta 9 and Published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Shyambazar Calcutta.

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXIX. No. 6 — १८७८-शकीये आश्विने ३९श-वर्षस्य ६ष्ठ-संख्या — October 1956.

## मतिमञ्जरी

### असन्तोषः

[ निबन्धकः—श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः ]

अद्यत्वे यत्रैवास्माभिर्दृष्टिर्निपात्यते तत्र तत्र सर्वत्रैव मनुष्याणामसन्तोषः परिलक्ष्यते। राष्ट्रस्य व्यवहारेण नागरिका धनिनामाचरणेन वित्तहीना ग्रामनायकस्य प्रभुत्वे ग्रामवासिनः, पुत्राणां समाचरणेन जनकाः, पितुर्व्यवहृत्या तनुजाः किमधिकं स्वामिनो व्यवहारेण धर्मपत्नी, तद्व्यवहारेण वा स्वामिनो न सन्तुष्टाः। किमिदमेव स्वाधीनतालक्षणम् ? उच्छृङ्खलताया वा ? द्वयोः सम्मेलनादेवेदं संघटितमिति विविच्यते। दीर्घं बन्दनबद्धा बलीवर्दा यदा बन्धनमुक्ता भवन्ति तदा किंकर्तव्यविमूढा यथेष्टमुद्देश्यविहीनं कर्म समाचरन्ति—तद्वद् दीर्घं पराधीनबन्धननिगडितचरणा अज्ञातास्वादाः स्वाधीनताया यथेष्टं विचरामः। किमत्र चित्रम् ? कस्य वा दोषः ? दोषस्तु यदि कस्यचित स्यादत्र स तु पराधीनतायाः। अत एव शान्तिप्रतिष्ठायै विविधानि विधानानि विरच्यन्ते राष्ट्रनायकैः। तथापि शान्तिर्न प्रतिष्ठिता भवति। विधानप्रणयनेन तस्य

कठोरप्रयोगेण वा सुदुरपराहता शान्तिप्रतिष्ठा। अपि च विधानप्रयोगमात्रेण राज्यशासनं दुर्बलस्य राष्ट्रस्य लक्षणम्। सबलं राष्ट्रं तावत् प्रेम्णैव राज्यमसपत्नं शास्ति। सामादयः प्रयोक्तव्या इति न प्रयोज्याः। साम्न एव प्रथमप्रयोगः कार्यः;—सति प्रयोजने क्रमशो दानभेदौ ततश्च चरमे चरमो दण्डः प्रयोक्तव्यः इत्येष नियमः। राष्ट्रं तावद् विधानप्रणयने समुत्सुकम्, अन्ये च यथा राष्ट्रद्वारा विधानप्रणयनेन स्वाभीष्टसिद्धिः स्यात् तत्र कृतप्रयत्ना दृश्यन्ते। किं बहुना यत्र भारते वर्षे सतीत्वं नामैकमनाकरजं महामूल्यं रत्नमासीत् तदपि विनामूल्येन विक्रीयते तदधिकारिणीभिरिति नितरां व्यथयति पारत्रिकसुखद्रष्टॄणां चेतांसि। अहो! तत्रापि विधानप्रणयने व्याकुलता। समुद्रमन्थनवद् भारतवर्षमधर्मेण नितरामालोड़ितं भवति तदैवालोड़ितो भारतमहासमुद्रः स्तब्धो भविष्यति यदेतस्ततः सञ्चमाणानां मनुष्यजीवानां सामर्थ्यं केन्द्रीभूतं भविष्यति—यदा तु सन्तोषामृतं भारतमहासमुद्रात्थितं निपीय मानवा अमरत्वं लप्स्यन्ते तदा पूर्ववद् वासुदेवोऽपि मोहिनीवेशं स्वीकृत्यास्मभ्योऽमृतं परिवेशयिष्यति! एवमसन्तोषनिरतं भारतवर्षं कदा सन्तोषामृतं पास्यति स एव कालः प्रतीक्षणीयः

विपद् विपदमनुवध्नातीतिनियमेन सम्प्रति नित्यप्रयोजनीयानां द्रव्याणां मूल्यवृद्धिर्देशवासिन उद्वेजयति। तदेतद्कारणमनुसृत्य सर्वत्रैवासन्तोषः परिलक्ष्यते। द्रव्यमूल्यं प्रायः पञ्चषड़्गुणितम्। तदनुपातेनायो न वर्धितः कस्यापि। शस्यप्रधाने देशे शस्यमूल्यवृद्ध्या सर्वेषां द्रव्याणां मूल्यं वर्धितं भवति, शस्यमूल्यवृद्धिं प्रत्यतिवृष्ट्यादीतिप्रकोपेण शस्यानुत्पाद एवान्यतमकारणम्। बहुषु कारणान्तरेषु शस्योत्पादकानां कर्षकाणां समुन्नततरकृषिविषयकज्ञानाभावः प्रधानकारणम्। एतदर्थं राष्ट्रेण यः प्रयत्नविशेषो विधीयते सोऽप्यकिञ्चित्करः।

तत्किं स्वाधीनताया एतदेव लक्षणं यत् राष्ट्रेण सर्वं कृत्यं सम्पादनीयमिति? तन्न कुत्रापि परिदृश्यते। एतादृश्यामवस्थायामपि राष्ट्रं विविध-

शुल्कभारेण यन्नागरिकान् पीड़यति तत्र किमुत्तरम्। वस्त्रशुल्कवर्धनेन पूजायाः प्राग् यदसन्तोषः सम्पादितो जनमनःसु तत्र वा किमुत्तरम्? भविष्यत्पञ्चवार्षिकपरिकल्पनचरितार्थाय संगृह्यतेऽर्थं इति चेत् तद् युक्तमयुक्तं वा? राष्ट्रेण धनागारो वर्द्धनीयः एव नात्र सन्देहप्रसरः, किन्तु दीनानां पीड़नेनेति यदि ब्रूयात् तदाप्येवमुत्तरं यद् राष्ट्रेण धनिनो निपीड्यन्ते किन्तु धनच्छत्रं धनिनः परिरक्षति पीड़ा तु दरिद्राणां प्राप्यत्वेन तत्रैव गच्छति। कोऽत्र दोषः? का वा गतिरिति चिन्तापरम्पराव्याकुलितं चेतः सततं सुतरां तमेवापेक्षते यदर्थं कालः प्रतीक्षणीय इति।

---

# शारदश्रीः

निबन्धकः—अध्यापकः श्रीदुर्गादास गोस्वामी, एम.ए. साहित्यशास्त्री

उडुगणपथवाहिन्यागता शारदश्रीः
स्थलजल-कमलेषु स्थापयन्ती स्वपादम्।
मदकलरुतहंसाबद्धमञ्जीरशिञ्जा
तरलधवलकाशैर्वीज्यमाना समन्तात् ॥१॥
सतड़िदशनिस्फूर्जाभीमनिर्घोषकम्पं
निविड़जलदजालं मेदुरं कज्जलाभम्।
नद-जनपद-शैल-प्रान्तरेषु प्रवृष्टं
द्रुतमभिमतवातैर्दूरमुत्सारयन्ती ॥२॥
सरभसमिभदन्ताद्भ्रशुभ्राभ्रत्रासो
मृदुलमरुति तावद् गात्रतः स्रंसयन्ती।
कलमभिदधतीव प्रस्फुटत् पुष्पपाली-
परिमल परिमीलद्भृङ्गनादच्छलेन ॥३॥
नभसि पयसि भूमौ चादधाना प्रसादं
व्रततितरुषु मुक्तास्वच्छनीहारबिन्दून्।

प्रतिजनमपि सान्द्रानन्दसन्दोहबन्धं
दिशि दिशि वितरन्ती सुस्मिता श्यामलाङ्गी ॥४॥
उपरि ततवितानेनेन्द्रनीलप्रभाभृ-
न्निरवधिगगनेन द्योतिता पादपीठे ।
मरकतहरिताभैः शाद्वलैः सम्भृतश्रीः
प्रतिनवतनुशोभा दिग्विदिग्व्यापिनीयम् ॥५॥
कनकरुचिनवोद्यद्भास्वदातप्तरश्मि-
च्छुरितमुकुटभासा भ्राजमानेव राज्ञी ।
दिनरजनि मुखेषु प्रत्यहं स्तूयमाना
श्रुतिमधुरविरावै-र्वन्दिभूतैः शकुन्तैः ॥६॥
निशि निशि गततन्द्रैः स्यन्दिभिश्चन्द्रपादैः
स्नपिततरुणकान्तिः स्वप्नमुग्धालसाक्षी ।
शयनशिथिलवेल्लनफुल्लधम्मिल्लपाशात्
सपदि परिकिरन्ती छिन्ननक्षत्रमालाम् ॥७॥
निखिलभुवनलोकप्राणरूपाणि शस्या-
न्यमरमनुजभोग्यान्यात्महस्ते वहन्ती ।
उरसि शुचि पयांसि स्वादुशीतानि चापि
प्रकटितकरुणार्द्रा मातृमूर्तिश्चकास्ति ॥८॥
नवरुचिमदनर्घा कल्पसम्पत्प्रदात्री
प्रतिभवनमजस्राह्लादराशेर्विधात्री ।
असुखशतपरीतं लोकमाबालवृद्धं
भृशमपचितखेदं कुर्वती वत्सरान्ते ॥९॥
इह भुवि तुहिनाद्रेः शन्दमानन्दमय्याः
प्रहतपटहनादैः स्वागतं सन्दिशन्ती ।
प्रतिहृदयमपूर्वोत्साहसौख्यानि यच्छ-
न्त्यपि पुनरुपसन्ना सर्वमर्त्याभिनन्द्या ॥१०॥

---

# माणवक-गौरवम्

[ निबन्धकः—श्रीकाश्यपकविः ]

( पूर्वानुवृत्तम् )

## चतुर्थाङ्कः

प्रथमदृश्यपटः

हारीतः—तत का गतिः ? भगवन ! एष सुचिरं स्नेहेन परिपालितो हारीतः प्रणमति । कृपया प्रयुज्यतामाशीः ।

धौम्यः—सुदीर्घमायुस्ते भूयात् ।

हारीतः—अहो ! मम सुदीर्घमायुर्दुराशास्ते, न रोगमुक्तिम् । हा ! हा ! महते दुःखाय रोगिणः सुदीर्घमायुः अथवा,—

मोहेनानुष्ठितं पापं फलं तस्य न भीक्ष्यते ?
मूढ़ हारीत ! नष्टोऽसि स्वेन दोषेण तावता ॥

( प्रकाशं ) भगवन् ! अनुगृहीतोऽस्मि । तदस्यां सुचिरादाश्रम-परित्यागवेलायां कृपया मामनुमन्यतां भगवान, यथा आपृच्छय मातरं सतीर्थ्यांश्च गच्छामीति ।

धौम्यः—नहि, नहि, अलमतःपरं तैः सह तव चाक्षुषेणापि सम्बन्धेन । तदेहि यावत स्वयमेवाहं त्वामाश्रमाद् वहिः प्रापय्य निर्वृतो भवामि ।

हारीतः—का गतिः ? एष गच्छामि ।

धौम्यः—एहि हारीत ! इतः इतः । ( परिक्रामति )

हारीतः—अहो मे मूर्खता !

लोकातीतगुणो गुरुः प्रतिगतः सोऽयं न भक्त्या स्तुतः
सन्दीप्ता प्रतिभा वृथैव विहिता शास्त्राद् बहिर्वर्त्तिता ।
विद्वेषेण गुरौ चितं गुरुतरं पापं स्वविध्वंसकृत्
हा हा स्वेन हतोऽस्मि मूढमतयः पश्यन्तु मे दुर्विधाम् ।।

अहो ईदृश एव युक्तः परिणामो मादृशाम् !

द्वितीयदृश्यपटः

ततः प्रविशति गायन्ती गुरुभक्तिः

गीतम्

अयि नर परिहर गुरुविद्वेषम्
जनयति सोऽयं पापविशेषम् ।
विष्णुविरिञ्ची गिरिजानाथो गुरुरिति मानी शिवमुपयातः
नहि वलमास्ते गुरुकरुणातः नयति नरं सा काम्यमशेषम् ।।
कुपितो गुरुरिह वितरति कष्टं सकलक्षेमात् कुरुते भ्रष्टम् ।
न खलु विनाशय मूढ़ निजेष्टं चिन्तय सुचिरं गुरुमखिलेशम् ।।
दवयति भवतः स विषमतिमिरं घटयति कृपया मतिमयमिहिरं
तं परिपूजय भक्त्या सुचिरं संश्रय संश्रय कुशलमशेषम् ।।

( निष्क्रान्ता )

तृतीयदृश्यपटः

ततः प्रविशति ससम्भ्रम उपमन्युः

उपमन्युः—( ससम्भ्रमम् ) आर्य्य कात्यायन, आर्य्य कात्यायन, क्वासि, इतस्तावत् शीघ्रमेहि ।

( ततः प्रविशति कात्यायनः )

कात्यायनः—अये उपमन्युरेष व्याहरति ! वयस्य, उपमन्यो ! एषोऽस्मि तत् कथय किमेवं सम्भ्रान्तोऽसि ?

उप—आर्य्य कात्यायन ! अत्याहितमत्याहितम् !

कात्यायनः—किमिव ?

उप—हारीतो नाम भगवता परित्यक्तः ।

कात्यायनः—ननु कस्मै विधये

उप—न खल्वेवम् !

कात्यायनः—किमिति नावधारयामि, तत् स्पष्टं ब्रूहि ।

उप—गुरुणा भगवता कुपितेन हारीतः सुचिराय मठाद् विसर्जितः ।

कात्यायन—अपुनरावृत्तये ननु ?

उप—अथकिम् ।

कात्या—कथं विज्ञातवानसि ?

उप—आर्य्य, नेदं रहस्यम् ! एष भगवानतिप्रकाशं पश्यतामेव दूराद् अस्माकं हारीतमाश्रमाद् वहिर्विसर्जयितुं गतः ।

कात्या—आम् ! एतावता कालेन फलमुपजातं हारीतस्य दुर्णीतिलतिकायाः ।

उप—आर्य्य, अपि नाम बीजमस्य निरूपितम् ?

कात्या—वयस्य उपमन्यो ! किं वात्र विशेषतो निरूपणीयम् ? दुरन्तवृत्तस्य हारीतस्य विशेषतो गुरुविद्वेषमेवात्र बीजं पश्यामि ।

उप—एवमिदम् ?

कात्या—अथकिम् । असंशयमिदमेवात्र बीजमवगच्छ ।

उप—कथमिदमार्य्यो जानाति ?

कात्या—वयस्य उपमन्यो ! अपि नाम नैदमुपलक्षितपूर्वं युष्माभिः, यत् हारीतो नाम भगवन्तं न तथा गौरवेण पश्यति स्म । असन्नमपि दोषमस्य सूचयितुं प्रकाशमप्रकाशं वा महान्तं यत्नमाशिश्रियत् । प्रत्यक्षदेवतां मातरं गुरुपत्नीमपि गुरो र्व्यसनमात्रसहचारिणीं प्रत्यपीपदत् । गुरोरध्ययनं कुर्वन्नपि स्वीयप्रतिभायाः प्रशस्तिसमुद्घोषणाय तदिदं स्वेनाकृतं प्रचारयति स्म ।

गुरोरादेशं कथञ्चन पालयितुं प्रवृत्तोऽपि गुरोः स्वार्थमात्रपरतां प्रकटय्य तस्य लघुचित्ततां प्राचारयत्। अन्येन क्रियमाणामपि गुरोः प्रशस्तिमसहमानः प्रतिपदं गुरुपरीवादादभीतः पापसागरे दृढं निमज्जन्तमात्मानं न बुबुधे। किं बहुना? विद्यादिजन्ये यशसि परासहिष्णु र्महतो विद्वेषादारुणिं विनाशयितुं विषप्रयोगादपि न निववृते। तदिदानीम्,—

( क्रमशः )

---

# उन्मत्ता

[ लेखकः—श्रीपराशर-भट्टाचार्य-साहित्याचार्यः ]

( पूर्वानुवृत्ता )

उपरते रुदिते कियत्कालं साधुना गतसत्त्वेवाभूत्। अहं भीत इव। ततः सा संज्ञामुपलभ्य मां पुरतस्तिष्ठन्तं निभाल्यावोचत्—"किं करोमि सौम्य, परवत्यस्म्येतस्य। अस्तु। श्रूयताम्। ततो दारकस्य मुखं विलोकयन्ती सर्वं दुःखजातं पृष्ठतः कृत्वोपार्जने व्यापृताभवम्। धनिनां गृहेषु परिचरन्ती यद्यत् प्राप्नुयां तेन दारकमपोषयम्। यदा स्वामी स्वर्गतस्तदैव दारकः सप्तमासकः अहं चासं त्रिंशतिहायना। वैधव्येऽपि मां लावण्यं नाजहात्। ततः केचन मम कुलजा भूयांसो धनिनोऽकामयन्त। किन्तु काप्यहं साभिलाषं मनो न व्यापारयम्। श्रमोपार्जितेन द्रव्येण मे दारकः संवर्द्धनस्य पुत्रो विवर्द्धनो नाम क्रमशोऽवर्द्धत। स यावानैधत तावतीं रूपेण, वचसा, गत्या, हासेन च पितुः सरूपतामलभत। एवं सोऽष्टादशवर्षदेशीयो युवा श्रमाभ्यासेन पुष्टाङ्गः। किंचिदुद्भिन्नश्मश्रुरभवद् ग्रामीणपाठशालायां गुरोराधनया कियान लब्धपारश्च।

"सौम्य, बहूक्तम्। गम्यतां स्वकं गन्तव्यम्। किन्तेऽशेषेण श्रुतेन! अग्रे भवे वृत्तं हृदयं मे छेत्स्यति।"

अहमब्रवम्—"सुन्दरि, गतेऽपि वयसि नाद्यापि त्वां लावण्यमुज्झति। यदि विंशतिवर्षदेशीया त्वं मम कथमपि नयनगोचरी अभविष्यस्तदाहमपि त्वामकामयिष्ये। अधुनापि त्वं यूनां मनांसि मथ्नासि।"

ततः सा पुनर्मां विस्फारिताभ्यां नेत्राभ्यामपश्यत्। विलोक्य अंकुशहता गजवधूरिवाकम्पत। क्षणं तूष्णीं स्थित्वा पुनरवोचत "रमणीयापाङ्ग, न मामुपहस। किं सत्यमहमद्यापि चार्वङ्गी या यूनां मनांसि मथितुं प्रभवामि। न हि भोः! जना मां घृणया विलोकयन्ति। किन्तु त्यज्यतामेषा ग्राम्या कथा। कश्चित्त्वं मम वृत्तमशेषेणाश्रुत्वा मोक्तुं नेच्छसि। तर्हि अवहितो भव। एकदा विवर्द्धनो माचष्ट—जननि, अद्यावधि बहूनि कष्टान्यङ्गीकृत्य त्वयाहं लालितः पालितश्च। अधुनाहं युवा कार्यक्षमो जातः। तस्मात्त्वमितः परं मयापि पालनीया सेव्या च। परन्तु कार्यमेतद्द्रव्येण साध्यम्। धनिनामत्रत्या परिचर्या मे मनोनीता न भाति। तस्मादाज्ञापय मामुपार्जनाय बहिर्गन्तुम्।"

अहमब्रवम्—"जात, त्वमधुना बालोऽसि। राज्ञामपि कष्टकरी परदेशस्थितिः। त्वं तु निर्धनोऽकृतबुद्धिरज्ञातसंसारवृत्तो बहिर्गत्वा केन साधनेनोपार्जयिष्यसि। तस्मात्त्वमधुनात्रैव तिष्ठ। अहन्ते योगक्षेममधुना वहामि तथैवाग्रेऽपि वक्ष्यामि। नो चेन्मामपि तत्र नय यत्रासि गन्तुकामः।

"स मम हृदयानन्दकरो बहिश्चराः प्राणा इव विवर्द्धनोऽभणत्—अम्ब, अत्र स्थिता त्वं किं करिष्यसि? ऋते भग्नमेतद्गृहमत्र किमस्ति भवत्याः। यथावां सुखं वा दुखं वात्र तिष्ठन्तौ अनुभवावस्तथैव बहिर्गत्वापि लप्स्यावहे। किन्तु जननि, त्वमसि वनिता। सर्वथापरिचिते स्थाने तव गमनमशोभनं भविष्यतीति कियत्कालं त्वमत्रैव प्रतिपालय। अहं बहिर्गत्वोपार्जनस्य कंचित् पन्थानं स्थानं च वसतेः कृत्वा त्वां नेष्यामि।

२

"बहुधा वारितोऽपि स न न्यवर्ततात्मनो निर्णयात्। एकदा मां विहायागात। अहं तमनुगता कियद्दूरम्। सोऽत्रैवेत्य रेलयानेन दक्षिणापथमगादहं हतभागा हृदयं हस्ताभ्यां निगृह्य महासरः परावर्ते।"

अहम्—"एकपुत्रा त्वं हीना बन्धुभिर्महत् कष्टं लब्धवती। तत स्ततः।"

उन्मत्ता—विशालाक्ष, त्वं डिहरी नगरं वेत्थ। यत्राधुना बहूनि यन्त्राणि समानीतानि, यानि जनमन्तरैव भूयांसि कर्माणि साधयन्ति। तत्र जीविकामुपलब्धुमनेके ग्रामीणा जना यान्ति।"

अहम्—जानामि भद्रे, तस्य नगरस्य स्वामिनमपि नाम्ना स्वरूपेण च।

उन्मत्ता—तत्रैव मे बालो गतः। बहूनि दिनानीतस्ततो भ्रमन् सोऽतिवाहितवान्। किमप्युपार्जनस्य निमित्तं नाप्नोत। मया पत्रं प्रेष्य महासरसि परावर्तितुं सकामं प्रेरितः किन्तु मम वचः कर्णं नाकरोत्। एवमेव गच्छति काले स कस्यांचन कर्मशालायां किमपि कर्म प्राप्तवान्। कियतः कालात् परतः कर्माचरन्तं तं स्वामी प्रोवाच—विवर्द्धन, अहं त्वा मम गेहे कर्माचरन्ते द्रष्टुमिच्छामि। कोमलाङ्गस्त्वं कर्मशालायाः कर्कशं कर्मानुष्ठातुं न क्षमः। मम गृहस्य त्वय्यर्पितं कार्यमल्पेन कालेन समाप्तिं यास्यति। अत्र यावद्वेतनं लप्स्यसे ततोऽतिरिक्तं भोजनमपि तत्र प्राप्स्यसि।"

"स्वामिनो व्याहारेण मुग्धो मे तनयो मृगयोर्ध्वनिना मृग इव तस्य वशगोऽभूत्। कर्मशालां विहाय स गृहकर्मपरो बभूव। तत्र कार्यमाचरन स मामेकं पत्रं प्राहिणोत् यदस्ति मे निकटे किं तद् द्रष्टुमिच्छति भवान् ?"

अहम्—"कथं नु न पश्येयम्। दर्शय, क्वास्ति तवार्भकस्य पत्रम्।"

ततः सा निबद्धां पोट्टलिकां श्लथीकृत्य कस्यचन कंचुकस्य पुटिकायाः पत्रं निष्काश्य मम हस्ते निधाय—सौम्य पठ, मामपि श्रावय इत्यवोचत्।"

अहमपठम्—"पूज्याया मातुश्चरणौ वन्दे। अहमत्र स्वामिनो गेहे

कर्माचरन सुखी वर्त। त्वं दूरेऽसि। तवादर्शनजः शोको यदा कदा मामभिभवति। अहं त्वरितमेवागमिष्यामि। अत्रागता त्वं स्वामिनो बालान् लालयितुं प्रभविस। तदर्थं वेतनमपि बहु लप्स्यसे किन्तु मातः, इतः परं त्वां परिचरन्तीं द्रष्टुं मम चेतो न सन्नह्यति। त्वां सुखितां हृष्टां वाञ्छाम्यवलोकयितुम्। स्वामी वहिर्गृहं दातुं प्रतिशृणोति। तत्रैव त्वं निवत्स्यसि। अहमुपार्जनं कृत्वा तव हस्ते दास्यामि। त्वं मामाज्ञापयिष्यसि।

तवैव शिशुः,

विवर्द्धनः"

पत्रे शोभना वर्णा आसन्। लेखनक्रमश्च साधुः। पत्रं संवृतं कृत्वोन्मत्ताया हस्ते दत्त्वा कथितवान्—उन्मत्ते, ततस्ततः।

"ततो मासद्वयात् परतः स एकदा ग्रामे आगतः स्थितश्च पंचदश दिवसान्। किन्तु पुनः डिहरीं गच्छन न मां नीतवान्। ममानयने कारणं पृष्ट आचष्ट—मातः अर्थसंचयो नास्ति संप्रति। एष ग्रामस्तन्न-गरम्। तत्र गतायास्तव नागरं वास्तुजातमपेक्षितं स्यात्। मासषट्केन मेऽर्थसंचयो भविष्यति! अथागत्य त्वां नेष्यामि। तावत्त्वमत्रैवोप तिष्ठमाना मां प्रतीक्षस्व।

"गमनान्मासात् परं यानावरोहणस्य कश्चित्, भृतकस्तड़ित्पत्रमेकं मामाहूय हस्तेऽदात्। तत्रोट्टंकितमासीत्—"दुःखिनि विधवे, तव तनयः स्वर्गतः"। सहसा मम विश्वासो नाभवत्। कथं मामपहाय विवर्द्धनो मे स्वर्यास्यति? गते तस्मिन् को मे अवलम्बः स्यादिति न गणयिष्यति? किन्तु सहसैव कल्पनोपरता। कठोरं सत्यं पुरतोऽनृत्यत्। धनं गतं, स्वामी गतो यो मे दीनायाश्चरमे वयसि अवलम्बः सोऽपि स्वर्गतः। मया बहुरुदितम्। प्रयतितेऽपि वाष्पधारा बहुकालं नोपरता।

( क्रमशः )

# वेदान्तविमर्षः

( प्रथमभागः )

[ निबन्धक :—आचार्यकृष्णदर्शनाचार्यः ]

(पूर्वतोऽनुवृत्तः)

सोऽयं देवदत्त इति वाक्ये च न लक्षणा, तथाहि यस्य पूर्वदृष्ट तत्कालसम्बन्ध इदानीं विनष्टः स मे पुरोवर्त्तीत्येव तद्वाक्यस्यार्थः ; यः पूर्व्वेद्युर्वर्द्धमाननगर्य्यामासीत् स इदानीं कलिकातायां वर्त्तते इतिवत्, नात्र च काप्यनुपपत्तिरिति कुतो लक्षणा ? जीवब्रह्मणोश्च नाभेदो विवक्षितः किन्तु भेदाभेद एवेति दर्शितमाचार्य्येणैव "अंशो नानाव्यपदेशादि"ति सूत्रे, अत्र भिन्नाभिन्नत्वस्य हेतुत्वकीर्त्तनात् सिद्धस्यैव च पदार्थस्य हेतुत्वात् तयोर्भिन्नाभिन्नत्वं सिद्धमेवेति प्राप्तम् । "भेदव्यपदेशात्" "भेदव्यपदेशाच्चान्यः" "अधिकन्तु भेदनिर्द्देशादि"त्यादौ भेद एवोक्तो न त्वभेदः क्वापीति बोध्यम् । परैरप्युक्तं "भेदाभेदावगमाभ्यामंशत्वावगम" इति । अणुत्वात् कर्म्माधीनत्वात् सुखदुःखभोक्तृत्वात् मुक्तिलाभात् त्रिपाद्भूतवैशुद्धब्रह्मणो विभक्तत्वाच्च भेदो ब्रह्मणो जीवस्य चिद्रूपत्वाच्चाभेदः । एवञ्च "आत्मानमेव लोकमुपासीत" "एतमितः प्रेत्याभिसंभवितास्मि" "यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छती"ति भेदवादिन्यः, "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता" ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवाः" इत्यभेदवादिन्यश्च श्रुतयः सुपपन्ना ज्ञेयाः ।

नचाध्यारोपापवादन्यायेन जीवब्रह्मणोः शुद्धिरुक्ता वेदान्ते, किन्तु स्वप्नसुषुप्त्यवस्थाभेदप्रदर्शनेन जीवस्य, जगद्वैलक्षण्योपदर्शनेन च ब्रह्मणः शुद्धिरुक्ता तृतीये । न च ब्रह्मज्ञानेन जगतो बाधमाहतुः श्रुतिसूत्रे, न च गीताशास्त्रे ब्रह्मदर्शनप्रकरणेषु विश्वप्रलयः कुताऽप्युक्तो भगवता । "तद्धैतत

पश्यन्नृषिर्वामदेवः प्रतिपेदे" इत्यादिब्रह्मज्ञानप्रकरणेषु जगद्बाधाश्रवणात्, फलाध्याये च स प्रपञ्चं मोक्षप्रकारं वदन्नपि सूत्रकारो न जगद्बाधमाह स्म। "यत्र त्वस्य सर्व्वमात्मैवाभूदि"त्याद्याः श्रुतयश्च महाप्रलयं प्राहुर्न ब्रह्मज्ञानाज्जगद्बाधमिति दर्शितमस्माभिः सूत्रभाष्ये। न ह्यविद्याजातं जगद् वदन्ति वेदान्ता येनात्मज्ञानादविद्यानाशाज्जगद् बाध्येत। बौद्धा एवाहुरविद्याया जगतः कारणत्वं तत्त्वज्ञानाच्चाविद्यानाशाद् विश्वप्रलयं च, यथाह चन्द्रकीर्त्तिः—"तत्त्वदर्शने हि सर्व्वपदार्थानामेवानुपलम्भान्नास्ति किञ्चिद् यदालम्ब्य कर्म्म कुर्यादि"ति। "तदेवं भावनाचतुष्टयवशान्निखिलवासनानिवृत्तौ परिनिर्व्वाणं शून्यरूपं सेत्स्यती"ति सर्व्वदर्शनसंग्रहे बौद्धप्रक्रियायां माधवाचार्य्यश्च। नैवं वेदान्ताः।

किञ्च जगत्कारणमविद्या च सती वाऽसती भवतां मता? आद्ये द्वैतत्वापत्तिः, द्वितीये तुच्छत्वात् कारणत्वासम्भवः। आरोपितसत्तया सत्तावती चेत् आरोपकारणं किञ्चिद् वक्तव्यं तस्यचासम्भवात् तदभावः। आरोपस्य च ज्ञानमात्रत्वात् विषयाभावात् तद्दोषतादवस्थ्यात्। शुक्तिरूप्याद् भूषणाद्यनुत्पत्तेर्मरीच्यद्भिः स्नानपानाद्यनिष्पत्तेर्बाधोत्तरं नात्र रौप्यं जलं वा जातं नष्टं वेत्यबाधितप्रत्ययाच्च भ्रमविषयस्य तुच्छत्वात् सर्पभ्रमाद् भयकम्पादेश्च ज्ञानमात्रकार्य्यत्वादिति प्रपञ्चितं सूत्रभाष्ये। अनादिभावरूपा च ब्रह्मवन्नित्यैव स्यादित्यनिर्म्मोक्षप्रसङ्गः।

विज्ञानमयादिसमष्ट्युपहितस्य सूत्रत्वं हिरण्यगर्भत्वं च न वेदान्तसिद्धं यदि नाम सर्व्वानुस्यूतत्वात् तस्य सूत्रत्वं तदा परब्रह्मण एव तद्वाच्यम्।

"मयि सर्व्वमिदं प्रोतं सूत्रे मणिगणा इवे"तिस्मृतेः। "वायुर्वै गोतम तत् सूत्रमि"ति श्रुतिश्च वायोरेव सूत्रत्वमाह स्म। सूत्रग्रथितमुक्तादामवत् वायुना ह्यवष्टब्धं जगत् शरीरं च प्राणिनां यथायथं कार्य्यायालं न विस्रस्तं स्यादिति वायोरेव करणत्वात् सूत्रत्वं "वायुना हि गोतम सूत्रेण संदृब्धानि भवन्तीति तृतीयाश्रुत्या हेतुवन्निगदेन च

दर्शितम्। हिहैतौ। नैतेन भूतेन्द्रियप्राणान्तःकरणानां सप्त-दशानां सूत्रत्वमायाति स्थूलप्रपञ्चस्यापि तथात्वात् सूत्रत्वापत्तेः। न च तेषां वाय्वात्मकत्वम्। सांख्यानां महत्तत्त्वाख्यं सूत्रं श्रौतत्वेन प्रति-पादयितुकामास्तादृशीं श्रुतिमलभमाना "वायुर्वै गोतम तत् सूत्र"मिति सूत्रपदघटितां श्रुतिमेव कथञ्चित् तत्परतया व्याख्याभासेन विकुर्वते मायिकाः। बुद्ध्युपहितचैतन्यस्य हिरण्यगर्भत्वे न प्रमाणं किञ्चिद् विद्मः। "हिरण्यगर्भः समवर्त्तताग्रे जातस्य देवः पतिरेक आसीदि"ति श्रुतिर्हिरण्यगर्भसद्भावे प्रमाणं भवदपि न तस्य तादृशसमष्ट्युपहितत्वे प्रमाणम्॥ न वा सूत्रकृताप्येतस्य सूत्रत्वं लिङ्गत्वं वा प्रोक्तम्। कथं वा तस्य प्राणत्वं यावता कतम एको देव इति प्राण इतीति" श्रुतिः प्राण-शब्देन ब्रह्मैवाह "स ब्रह्मत्यदित्याचक्षते" इति।

न च "तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वास" इति श्रुति-लिङ्गे प्रमाणमिति वाच्यं, मूर्त्तभूतत्रयरूपत्रयस्य विभागकारणत्वात् सवितू-रसत्वमुक्त्वा अमूर्त्तभूतद्वयक।र्यस्य हिरण्यगर्भस्य तद्रसत्वोक्तावर्थद्वैविध्योक्ते-र्विरोधात् सूर्य्यमण्डलस्थपुरुषस्यैवामूर्त्तभूतकारणत्वं युक्तं, स च परमात्मैव न हिरण्यगर्भस्तस्य सूर्य्यमण्डलस्थितेरश्रवणात् श्रवणाच्च परमात्मनः "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इति। नचासौ कूटस्थो वेदान्ते-ष्वभावात्। श्रुतौ च भूतत्रयाणां रूपत्रयविभागकारणत्वं नोक्तं सवितुः, किन्तु भूतत्रयरसत्वमेव। सवितृवच्चाध्यात्मिकभूतत्रयस्य रसश्चक्षुरेव प्रथमजत्वात् सूर्य्यस्यैव चक्षुःस्वरूपत्वात् "अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ-वि"ति श्रुतेः, "शशिसूर्य्यनेत्रमि"ति स्मृतेश्च। तथाध्यात्मिकामूर्त्तभूत-द्वयस्य रसो दक्षिणाक्षिस्थः पुरुषः परमात्मैव न लिङ्गं "य एषोऽन्त-रक्षिणि पुरुषो दृश्यते" "इन्धो वै नामैष योऽयं दक्षिणेऽक्षन् पुरुष" इति श्रुतिभ्यां, वामे चाक्षिण तत्पत्नी लक्ष्मीरास्ते, "अथैतद्वामेऽक्षणि पुरुषरूप-मेषास्य पत्नी विराट्" "विराट् बृहती श्रीरसी"तिश्रुतिभ्याम्। तस्मात् "तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वास" इत्यादि न लिङ्गस्य

रूपमाचष्टे वासनामयं किन्तु परमात्मन एवास्य रूपं तादृशं "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते"।

"यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्"

इतिश्रुतिभ्याम्। अत्र ब्रह्मदर्शिनाऽपि रुक्मवर्णस्यैव ब्रह्मणो दृश्यत्वोक्तेस्तत्त्वदर्शिनोऽपि रुक्मवर्णत्वकर्त्तृत्वेशितृत्वकारणत्वतो ब्रह्मणो दर्शनात् तदेव तत्त्वं न मिथ्या, अतस्तद्दर्शिन एव मोक्षमाह—

"तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति अतस्तस्य रुक्मवर्णत्वं नित्यमेव। "माहारजनं वास" इत्यादयश्चोपमास्तस्य सुवर्णवर्णत्वमेव दर्शयन्ति, न च रूप्यरैत्यताम्रादिवर्णत्वं कुत्राप्युक्तम्। आविद्यकत्वे रूपान्तराणामपि सम्भवात् यथा श्वेतद्वीपपतेः।

"माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्व्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि"॥ इति

ब्रह्मणो रुक्मवर्णत्वमीशितृत्वं च मनुरप्याह

"प्रशासितारं सर्वषामणीयांसमणोरपि।
रुक्माभं स्वप्नधीगम्यं विद्यात् तं पुरुषं परम्"॥ इति

"अरूपमस्पर्शमशब्दमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्"।

इति श्रुतिश्च भौतिकगुणानेवैकैकशः प्रतिषेधतीति भौतिकगुणराहित्यमेव ब्रह्मणः प्राप्तं ज्ञेयम्। विस्तरस्तु सूत्रभाष्येऽनुसन्धेयः। तस्मात् लिङ्गशरीरं कारणशरीरं च न वेदान्तसिद्धं किन्तु भूतसूक्ष्ममयमेव सूक्ष्मशरीरमिति स्थितम्।

लिङ्गकारणसंज्ञे न शरीरे श्रुतिसूत्रयोः।
सूक्ष्मभूतमयं सूक्ष्मशरीरं श्रुतिसूत्रयोरिति॥

न च विज्ञानमयादिकोषत्रयस्य स्वप्नत्वं श्रौतं स्वप्नस्य ज्ञानमात्रस्वरूपत्वात्, यथाह भगवान् सूत्रकारः "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि"ति, माया ज्ञानं "माया वयुनं ज्ञानमि"ति निघण्टुकोषात्। असति बाधे वैदिकेऽर्थे वैदिकसङ्केतस्यैव निरवकाशत्वेन प्राबल्यात्। श्रुतिश्चाह "सन्ध्यं

तृतीयं स्वप्नस्थानमि"ति, जाग्रत्सुषुप्तिस्थानयोरन्तर्वर्त्तिस्थानं सन्ध्यं तत्र स्थितो हि जीव उभौ लोकौ पश्यतीत्यर्थः। नात्र स्थूलप्रपञ्चलय उक्तः श्रुतिषु

नचा"स्य लोकस्य सर्व्वावतो मात्रामुपादाय स्वयं विहत्य" "स्वप्नेन शारीरमभिप्रहत्ये"त्याद्या श्रुतिः स्वप्ने लयं दर्शयति, यतो विहत्येत्यस्य देहमचेतनं कृत्वा इत्यर्थः। अभिप्रहत्येत्यपि तथा, "विहत्य निःसम्बोधमापाद्य, अभिप्रहत्य निश्चेष्टमापाद्य" इति च तैरेव व्याख्यातम्।

यदप्युक्तम् एतद्व्यष्टयुपहितचैतन्यस्य तैजसत्वमिति तदप्यसारम्, वेदान्तनयेऽन्तःकरणोपहितचैतन्यस्य जीवसत्त्वाभावादित्युक्तम्, माण्डुक्यस्य चाप्रामाण्यात्। यच्चोक्तं जरायुजादि समष्ट्युपहित चैतन्यस्य वैश्वानरत्वमिति, तदप्यसारं यतो "यस्त्वेतमेव प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति श्रुतौ सर्वकारणत्वात् द्युलोकादिपृथिव्यन्तप्रपञ्चस्यैवाहमित्यभिमानवतः परमेश्वरस्य वैश्वानरत्वमुक्तं "वैश्वानरः साधारणशब्दविशेषादि"ति। न तु न तु जरायुजादि स्थूलशरीरसमष्ट्युपहितचैतन्यस्य। सर्वात्मकत्वाद् विश्वनर एव वैश्वानरः। एष एव च विराट् न तु तादृशसमष्टिचैतन्यम्। नातश्च विराट्चैतन्यस्य तत् समष्टिरन्नमयकोषः। न च तस्य जाग्रत्त्वमपि। व्यष्टिस्थूलशरीराधिष्ठितजीवस्य च विश्वत्वं न वेदान्तशास्त्रात् प्राप्तम्।

सृष्टिश्च परमात्मन एव सद्रूपात् "बहुस्यां प्रजायेये"ति शङ्कापादाकाशादिक्रमेण भवति "तस्माद् वा एतस्मादात्मन आकाशः सम्भूत" इत्यादि श्रुतेश्च। तत्र क्षित्यादीनां त्रयाणामेव त्रिवृत करणं न पञ्चानां पञ्चीकारणं "तासां त्रिवृतं त्रिवृतमेकैकामकरोदि"ति त्रिवृतकरणश्रुतेस्त्रिवृतकुर्वत उपदेशादि"ति सूत्रात् पञ्चीकरणस्य श्रुत्यभावाच्च।

(क्रमशः)

---

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4. for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M, A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkabarya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri. M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakra, varti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada-Tarkacharya. Rs. 7..; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members),

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs, 5; Rs, 4-8 (for members).

24-6-57

Reg. No. C 1073

Vol. XXXIX. November 1956

No. 7 १८७८शकोये

३९श-वर्षस्य कार्त्तिके

७म-संख्या मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—1-4 as

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भाबालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXIX. No. 7 | १८७८-शकीये कार्त्तिके ३९श-वर्षस्य ७म-संख्या | November 1956.

## मतिमञ्जरी

### स्वार्थान्धता।

[ निबन्धकः—श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः ]

"सर्वः स्वार्थं समीहते" इति नानृतं वचः किन्तु तत्रान्धीभूतस्य न सौजन्यानुभूतिर्न शालीनतानुवृत्तिर्न लोकलज्जाविभीतिर्न सज्जनसंप्रीतिर्न सदाचारानुरक्तिर्नायतिदृष्टिर्न कर्तव्याकर्तव्यविचारणाशक्तिः, सर्वास्ता एकपद एव समूलनाशं नश्यन्ति। अद्यत्वे यस्मिन समये वसुन्धरा समदृष्टिसम्पन्ना सर्वानधिवासिनस्तुल्यस्नेहेन दिदृक्षते, यत्र च राष्ट्रसंघनामधेया संस्था परधनलोलुपतां परिजिहीर्षति, तस्मिन्नेव समये सुयेजाख्यजलमार्गमधिकृत्य साम्राज्यवादिनामापेक्षिकदुर्बलराष्ट्रावरोधस्पृहैव गर्हणीया, किं पुनराक्रमणम्। दौर्भाग्याद् वसुधाजनन्यास्तदेव संघटितम्। किमत्र चित्रम्—विचित्रप्राणभृद्भृते भूमण्डले निरपेक्षाणि बुद्धिमन्ति राष्ट्राणि दुर्बलपक्षं समर्थयन्ते—कानिचिद्वा सम्यगुदासीनानि—कानिचित सबलपक्षाश्रितानि। नवलब्धस्वाधीनतया दुर्बलमपि भारतराष्ट्रं तेजस्वितया न्याय्यमभिमतमुदघोषयत्। एतेन शान्तिकामिनो राष्ट्रनायकाः परां प्रीतिं

तृतीयं स्वप्नस्थानमि"ति, जाग्रत्सुषुप्तिस्थानयोरन्तर्वर्त्तिस्थानं सन्ध्यं तत्र स्थितो हि जीव उभौ लोकौ पश्यतीत्यर्थः। नात्र स्थूलप्रपञ्चलय उक्तः श्रुतिषु

नचा"स्य लोकस्य सर्व्वावतो मात्रामुपादाय स्वयं विहत्य" "स्वप्नेन शारीरमभिप्रहत्ये"त्याद्या श्रुतिः स्वप्ने लयं दर्शयति, यतो विहत्येत्यस्य देहमचेतनं कृत्वा इत्यर्थः। अभिप्रहत्येत्यपि तथा, "विहत्य निःसम्बोधमापाद्य, अभिप्रहत्य निश्चेष्टमापाद्य" इति च तैरेव व्याख्यातम्।

यदप्युक्तम् एतद्व्यष्ट्युपहितचैतन्यस्य तैजसत्वमिति तदप्यसारम्, वेदान्तनयेऽन्तःकरणोपहितचैतन्यस्य जीवसत्त्वाभावादित्युक्तम्, माण्डुक्यस्य चाप्रामाण्यात्। यच्चोक्तं जरायुजादि समष्ट्युपहित चैतन्यस्य वैश्वानरत्वमिति, तदप्यसारं यतो "यस्त्वेतमेव प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति श्रुतौ सर्व्वकारणत्वात द्युलोकादिपृथिव्यन्तप्रपञ्चस्यैवाहमित्यभिमानवतः परमेश्वरस्य वैश्वानरत्वमुक्तं "वैश्वानरः साधारणशब्दविशेषादि"ति। न तु न तु जरायुजादि स्थूलशरीरसमष्ट्युपहितचैतन्यस्य। सर्वात्मकत्वाद् विश्वनर एव वैश्वानरः। एष एव च विराट् न तु तादृशसमष्टिचैतन्यम्। नातश्च विराट्चैतन्यस्य तत समष्टिरन्नमयकोषः। न च तस्य जाग्रत्त्वमपि। व्यष्टिस्थूलशरीराधिष्ठितजीवस्य च विश्वत्वं न वेदान्तशास्त्रात् प्राप्तम्।

सृष्टिश्च परमात्मन एव सद्रूपात् "बहुस्यां प्रजायेये"ति शङ्कापादाकाशादिक्रमेण भवति "तस्माद् वा एतस्मादात्मन आकाशः सम्भूत" इत्यादि श्रुतेश्च। तत्र क्षित्यादीनां त्रयाणामेव त्रिवृत्त करणं न पञ्चानां पञ्चीकरणं "तासां त्रिवृतं त्रिवृतमेकैकामकरोदि"ति त्रिवृत्करणश्रुतेस्त्रिवृत्कुर्वत उपदेशादि"ति सूत्रात् पञ्चीकरणस्य श्रुत्यभावाच्च।

( क्रमशः )

---

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4- for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkabarya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri-M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakra, varti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada-Tarkacharya. Rs. 7..; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members),

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs, 5;Rs, 4-8 (for members).

Reg. No. C 1073

Vol. XXXIX. November 1956

No. 7 १८७८शकीये

३९श-वर्षस्य कार्त्तिके

७म-संख्या मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—1-4 as

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXIX. No. 7 — १८७८-शकीये कार्त्तिके ३९श-वर्षस्य ७म-संख्या — November 1956.

## मतिमञ्जरी

### स्वार्थान्धता।

[ निबन्धकः—श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः ]

"सर्वः स्वार्थं समीहते" इति नानृतं वचः किन्तु तत्रान्धीभूतस्य न सौजन्यानुभूतिर्न शालीनतानुवृत्तिर्न लोकलज्जाविभीतिर्न सज्जनसंप्रीतिर्न सदाचारानुरक्तिर्नायतिदृष्टिर्न कर्तव्याकर्तव्यविचारणाशक्तिः, सर्वास्ता एकपद एव समूलनाशं नश्यन्ति। अद्यत्वे यस्मिन् समये वसुन्धरा समदृष्टिसम्पन्ना सर्वानधिवासिनस्तुल्यस्नेहेन दिदृक्षते, यत्र च राष्ट्रसंघनामधेया संस्था परधनलोलुपतां परिजिहीर्षति, तस्मिन्नेव समये सुयेजाख्यजलमार्गमधिकृत्य साम्राज्यवादिनामापेक्षिकदुर्बलराष्ट्रावरोधस्पृहैव गर्हणीया, किं पुनराक्रमणम्। दौर्भाग्याद् वसुधाजनन्यास्तदेव संघटितम्। किमत्र चित्रम्—विचित्रप्राणभृद्भृते भूमण्डले निरपेक्षाणि बुद्धिमन्ति राष्ट्राणि दुर्बलपक्षं समर्थयन्ते—कानिचिद्वा सम्यगुदासीनानि—कानिचित् सबलपक्षाश्रितानि। नवलब्धस्वाधीनतया दुर्बलमपि भारतराष्ट्रं तेजस्वितया न्याय्यमभिमतमुद्घोषयत्। एतेन शान्तिकामिनो राष्ट्रनायकाः परां प्रीतिं

प्राप्तवन्तः। तेषु चिरं मित्रतापन्नाश्चीनाख्यभूमिभागशासकाः भूगोलार्ध-शान्तिप्रतिष्ठाकामितया प्रधानमन्त्रिभिर्नेहेरुमहोदयैरत्रैव भारते समागत्य सम्मिलिताः। अपरे च राष्ट्रनायका भारतवर्षस्य स्पष्टवादित्वं न्याय-निष्ठत्वं निर्भीकत्वञ्च समालोच्य केचन मनसा केचन वा वचसा प्रकाशनेन च मुदमनुबभूवुः। राष्ट्रसंघोऽपि नाधुना वर्तत उदासीनः। प्रयतते च स्वकर्तव्यमनुष्ठातुम्। आशास्महे साम्राज्यवादिनां हठकारित्वं न सम्यक् सम्पन्नं भविष्यति।—पृथिवीव्यापिप्रथममहासमरानलनिर्वा-पनात् परं विविधेन नाम्ना प्रचारितोऽयं संघः सबलपक्षाणाम् "अरिपु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानी"तिनीतिसमाश्रयात् दुर्बल एवास्ते। अधुना भारतवर्षं निष्ठया शान्तिकामित्वेन लब्ध्वा लब्धबलो भवितेत्याशास्माकं चेतो दृढयति। जगत्कल्याणानुध्यानं—सर्वेषां मनुष्याणां सुखावलोकनं निर्मत्सरं भारतं विना क्वास्ते? भारतस्य तामेवौपनिषदीं वाणीं सर्वमङ्गलजननीं यदि जगच्चिन्तयेत्—तदा न केवलं भारतस्य—न कस्यचिन्महादेशस्य—न वा गोलार्द्धस्य अपि तु सर्वस्यैव जगतः क्षेमं भविष्यत्येवेति नात्र सन्देहः कार्य्यः।

भारतमप्यधुना दीर्घपराधीनतया विस्मृतनिजसामर्थ्यं शास्त्रं प्रति विश्वासशून्यमिव प्रतिभाति। सर्वमानवशिक्षकाश्चासन्नारण्यकयुगकालीना भारतीया—नाधुनिकास्तेजोहीनाः। प्रयोजनमप्यस्त्यधुना भारतीयानां प्राचीनयुगीयसामर्थ्यलाभाय। तथा च सति स्वयं विशुद्धं विगतवृजिनं निर्लोभं भारतं जगदुपदेशाय स्वार्थान्धतायां दीपप्रदर्शनेन तिमिरापहरणाय समर्थं भविष्यति। जगतश्च स्वार्थान्धतापगमे सर्वे दिव्यज्योतिष्काः "सायोध्या यत्र राघव" इतीवात्रैव महीमण्डले स्वर्गं रचयिष्यन्ति स्वर्गसुखं चात्रैव लप्स्यन्ते। तदर्थमस्माकं भारतीयानां कर्तव्यमस्ति न वेति विचार-णीयं शास्त्रविश्वासवर्द्धिः सुधीभिरिति।

---

# उन्मत्ता

[ लेखकः—श्रीपराशर-भट्टाचार्य-साहित्याचार्यः ]

( पूर्वानुवृत्ता )

ततस्तस्मिन्नेव दिवसेऽस्मादेव स्थानाद् वाष्पयानमारुह्याहं डिहरीं गता! तत्र यमहं नरं नारीं बालं, वृद्धं वापश्यं तमाचख्ये—क्व इत तत् स्थानं यत्र मे तनयो विवर्द्धनो मृतः। किन्तु न कोऽप्युत्तरं प्रत्यपद्यत। सर्वे बधिराः संवृत्ताः! एवमेवाचक्षाणाया भ्रमन्त्याः स दिवसः सा रजन्यप्यपगता!

"अन्येद्युः प्रभाते कश्चिद् बालको मां श्रेष्ठिनो गेहं नीतवान यत्रार्भको मे कर्माचरति स्म। तस्मिन गृहे प्रविशन्तीं मां दौवारिको वारितवान। पश्चाद् विवर्द्धनस्य मां जननीं ज्ञात्वा प्रवेश आज्ञप्तः। अभ्यन्तरे प्रथमं दासो काचनामिलत्। मां विवर्द्धनस्य मातरं ज्ञात्वा मम शरीरं विवेष्ट्य स्फुटं प्रारुदत। तस्या रोदनध्वनिना अपराः स्त्रियः पुरुषाश्च तत्रागमन। गृहस्वामिनः कन्याष्टवर्षदेशीया विस्वरमरौत्। अहं तु तदा गतसंज्ञाभूवम्। बहोः कालादनन्तरं शान्ते वातावरणे बहुभिरुपचारैः संज्ञामुपगतायां मयि सखी मामुक्तवती समानव्यसने भगिनि, त्वमिवाहमपि विवर्द्धनस्य माता। जीवन् स तवानुपस्थितौ मां मातरमहं च तंतनयं भणामि स्म। अत्र स विषूचिकया सहसाक्रान्तः। क्वापि तदा विषूचिका नासीत्परतोऽपि नाभवत्। स गृहात चिकित्सागारे नीतः। अहमपि सहैव गता। अन्तर्बाह्यो जनः प्रवेशं नार्हति किन्तु मम स्नेहं निर्बन्धं च निभाल्य डाक्तरो ममान्तः प्रवेशमाज्ञप्तवान्। किं भणामि भगिनि, कोऽप्युपचारस्तस्य प्राणान निरोद्धुं न प्राभवत। मातः! मातः!! मातः!!! इति ब्रुवन बालो मे प्राणानजहात।

पुनः सोक्तवती—"भगिनि, विवर्द्धनमुखात्तव सर्वं वृत्तं ज्ञातमस्ति। त्वमत्रैवेतःपरं तिष्ठ। किं करिष्यसि महासरो गत्वा? आवां भगिन्यौ अत्रैव दुःखस्य दिवसान नेष्यावः।

अहम्—"भवति कोऽसौ कदर्यो यस्त्वामभिभवतीत्यद्धोंक्ते साब्रवीत तदपि शृणु। "अहमेकाकिन्यासम! एकाकिन्येव श्रेष्ठिनो गेहात् वाष्पयानावरोहणस्थानायाचलम्। मध्ये निर्जनप्राये भुवो भागे कश्चन युवा मन्ये पंचनदीयो मिलितः। स मां जग्धुम...इति कथयन्त्या एव मम वाष्पयानमायात, यदारुह्याहं पाटलिपुत्राय प्रातिष्ठे।

---

# माणवक-गौरवम्

[ निबन्धकः—श्रीकाश्यपकविः ]

( पूर्वानुवृत्तम् )

## चतुर्थाङ्के

### प्रथमदृश्यपटः

ज्ञानतोऽज्ञानतो वापि पीतं यद् विषमुत्कटम्।
तस्यावश्यं फलं तेन किं न भोक्तव्यमात्मना?

उप—आर्य कात्यायन, हारीतस्य तथा लोकोत्तरं सुतीक्ष्णं प्रतिभानमपि दृढ़मेव समुपेक्षितमेवं भगवतेति विस्मितोऽस्मि।

कात्यायनः—वयस्य, मा विस्मयं यासीः। अविनीतस्य सतः शिष्यस्य किं वा सुतीक्ष्णेनापि प्रतिभानेन लोकोत्तरेण?

उप—आर्य, स्वयमबुध्यमानस्यापि तस्य कथं नाम सदुपदेशेन भवता तस्य बुद्धिपरिवृत्तिर्नानुकूलिता?

कात्यायन—वयस्य उपमन्यो ! न जानासि यत् आदितः प्रभृत्येव मया हारीतस्य दुर्णयमुपलभ्य तदीयविनयसमुत्पादनाय समनुष्ठितः कीदृशः प्रयत्नो भूयान्। स पुनः स्वप्रतिभानगर्वाद् वा निर्विवेकतादोषाद् वा सर्वमेव मदीयमुपदेशमनर्थं मन्यमानः सुदूरे परिजहार। तत एवाद्य गुरुविद्वेषजन्मनो महापातकस्य परिणामभूतं विषमं रोगमासाद्य विपन्नो जातः। तदलमिदानीं पातकिनस्तस्य भूयसा प्रसङ्गेनापि,—यतः,—

कथापि गुरुपापस्य बीजं नरकवर्त्मनः।
निवर्त्तयति सा पुण्यं तदेषा च्छिद्यतां कथा॥

उप—आम! एवम्। आर्य, कात्यायन, आरुणिमद्य प्रातः प्रभृत्येव न पश्यामि, तत् क नु खल्वेष प्रस्थितः? अपि नाम भगवता कस्यचन गुरुकृत्यस्य साधनाय स नियुक्तः?

कात्यायन—अथकिम्।

उप—आर्य, किन्तत कृत्यम्?

कात्या—वयस्य, आरुणिरद्य भगवता प्रातरेव शस्यक्षेत्रे केदारखण्डबन्धनेन तत्र प्रविशतः सलिलसङ्घातस्य प्रतिरोधाय व्यापारितः।

उप—ननु एक एवासौ?

कात्या—अथकिम्। बहुत्र दृष्टशक्तिरारुणिर्नाम, तत् किमत्र चित्रम्!

उप—आम् एवम्!

( ततः प्रविशति धौम्यः )

धौम्यः—वत्स कात्यायन!

कात्या—भगवन, एषोऽस्मि।

धौम्य—वत्स, उपमन्यो!

उप—भगवन्, एषोऽस्मि।

उभौ—एष भगवतः पादयोः प्रणामपर्यायः!

धौम्यः—स्वस्ति युवाभ्याम्। वत्सौ! अद्याहं निरुपप्लवोऽस्मि!

उभौ—कथमिव ?

धौम्यः— आश्रमे सुचिरं यावद् यत्नेन परिपोषितः ।
दूरे क्षिप्तः समुत्पाट्य दुरन्तो विषपादपः ॥

कात्या—कस्य वार्त्तामुपक्षिपन्ति ननु भगवन्तः ?

धौम्यः—शिष्यापसदस्य हारीतस्य !

उभौ—आं ज्ञातम् !

कात्या—भगवन्. किमिति रोगग्रस्तोऽसौ आश्रमादपवाहितः ?

धौम्यः—एवम्, तत्सम्पर्कादचिरं गोष्ठीदूषणमाशङ्क्य तथा कृतम् ।

उभौ—आम् सुष्ठु युज्यते ।

धौम्यः—वत्स कात्यायन, वत्स उपमन्यो ! एवमुद्घोष्यतां मे शिष्य-गोष्ठ्यां—

उभौ—किमिति ?

धौम्यः—एवमुद्घोष्यताम्,—

गुरौ ये विद्वेषं मनसि परिपुष्णन्ति विवशा
असक्ताः स्वाध्याये व्यसनमथवा किञ्चन गताः ।
न वा नित्याचारान् विदधति वृथाप्रत्ययभृतो
न ते मूढाः सह्या मम नयलयादाश्रमपदे ॥

अपिच

ज्ञाताश्चेदपसार्यन्तां गवेष्यन्तां तथा परे ।
धौम्याश्रमपदे दुष्टाः स्थातुं नार्हन्ति केचन ॥

उभौ—यथाज्ञापयति भगवान ।

( ततः प्रविशति सोमरातः )

सोम—भगवन् ! एष सोमरातः प्रणमति ।

धौम्यः—स्वस्ति वत्साय सोमराताय । वत्स ! सोमरात ! किमसि वक्तुकामः ?

सोम—भगवन. एषा माता कथयति, अवसितो गवां दोहः, सम्प्रति प्राप्तः सञ्चारणकालः स्तासामिति ।

धौम्यः—आं ! सम्यक् समुद्बोधितोऽस्मि। तद् वत्स सोमरात ! गत्वा विज्ञापय वो मातरं एषोऽहं कालकलामनतीत्यैव गवां सञ्चारणस्य प्रबन्धं करोमीति।

सोम—यथाज्ञापयति भगवान।

धौम्यः—वत्स, उपमन्यो ! तथैवेदं कृत्यं, तदकालहीनं सन्नद्धो भव स्वकृत्यमनुष्ठातुम।

उप—एषोऽहं सन्नद्ध एवास्मि भगवन।

धौम्यः—वत्स, कात्यायन, गच्छ त्वमपि भिक्षाचरणाय।

कात्या—एवं यथादिशति भगवान्। (उभौ प्रस्थातु मुद्यतौ)

धौम्यः—वत्स, उपमन्यो ! तिष्ठ त्वं क्षणमात्रम्। अस्ति मे त्वां प्रति वक्तव्यशेषः।

उप—एष स्थितोऽस्मि। आदिशतु मां भगवान।

धौम्यः—वत्स, गोसञ्चारणप्रसङ्गेन पृच्छामि,—

पर्वतोपत्यकायां त्वमतिदूरे किलाश्रमात।
सञ्चारयसि गा नित्यं वृत्तिं कल्पयसे कथम् ?

उप—भगवन् ! वत्सपीतावशिष्टेन पत्रपुटके संगृहीतेन गोरसेन वृत्तिं कल्पयामि।

धौम्यः—आम् ! एवम् ? अतएव सर्वं दिनं परिश्राम्यतोऽपि ते तथा पुष्टं शरीरं कृशश्च सुतरां गोवत्सानाम् !

उप—भगवन ! मदीयशरीरपरिपुष्टौ कारणं सुगमं, वत्सानां पुनः शरीर-कार्श्ये को हेतुरिति नावधारयितुमर्हामि। तदुपदिशतु मां गुरुः।

धौम्यः—किमत्राधिकमवधारणीयम् ?

सचेतना गोवत्साः सुचिरं लालनेन त्वयि सानुकम्पा जनन्याः क्षीरं स्वच्छन्देनापिबन्तस्त्वदर्थं प्रभूतं शेषं रक्षन्ति। तेनैव यथेष्टमपिबतां तेषामीदृशं शरीरकार्श्यमिति।

उप—आं ज्ञातम् ! तद् भगवन् ! अतः परमन्येनैव केनचिद् वृत्तिं कल्पयिष्ये !

धौम्यः—वत्स ! कथय, केनान्येन वृत्तिः कल्पनीयेति ?

उप—भगवन् ! क्षीरं पिबतां वत्सानां मुखप्रान्तनिर्गलितैः फेनैरेव वृत्तिं कल्पयिष्ये ।

धौम्यः—वत्स ! नेदमप्यदोषं पश्यामि ।

उप—भगवन् ! कथमिव?

धौम्यः—वत्स ! अल्पज्ञोऽसि येन नावधारयसि । तदवधेहि,—

तथैव वत्सास्त्वयि सानुकम्पाः
फेनैः समं क्षीरमपि प्रदद्युः ।
ततो यथेष्टं तदिहापिबन्त-
स्ते कायकार्श्यं नितरां लभेरन् ॥

उप—आं ! ज्ञातम् । तदतः परमन्येनैव वृत्तिं कल्पयिष्ये !

धौम्यः—कथय वत्स ! किन्तदन्यद् वस्तु येनातः परं स्वां वृत्तिं कल्पयितासि ?

उप—(क्षणं विचिन्त्य) भगवन् ! अतः परं भैक्ष्येण जीविकां कल्पयिष्यामि ।

धौम्यः—वत्स ! न तावतापि दोषान्मुच्यसे ।

उप—भगवन् ! अत्रापि कथं दोष इति नावगच्छामि ।

धौम्यः—वत्स ! नेदं दुरवबोधम् । दृश्यतां सावधानम् । गोसञ्चारण-वेलायां निःसहाया गाः पर्वतोपत्यकायां परिहृत्य भिक्षाचरणाय सुदूरं प्रस्थिते त्वयि कुतोऽपि श्वापदाः समागत्य ताः पञ्चत्वं प्रापयेयुः ।

उप—भगवन् ! यद्येवम्, तदा गोषु क्षेमेणाश्रमं प्रविष्टासु वृत्तये भिक्षां चरिष्यामि ।

धौम्यः—वत्स ! मा मैवम् ! यतस्तत्र दोषान्तरं प्रतिपक्षं लक्षयामि ।

उप—किं नाम तद् भगवन् !

धौम्यः—वत्स ! समाकर्णय,—भिक्षाचरणार्थं मया समादिष्टेन कात्यायनेन सर्वतः समाहृते भैक्ष्ये पुनरपि त्वया विहितेन भिक्षाचरणेन परेषां भिक्षुकाणां वृत्तिव्याघातो गृहपतीनामुत्पीड़नश्चेति द्वयमनिष्टमापद्येत ।

उप—भगवन् ! यद्येवं तदा वनावृतायां पर्वतोपत्यकायां गाः सञ्चारयता मया शक्या मुनिगृहीतावशिष्टैः फलमूलैः प्रस्रवणप्रस्रुतसलिलैरेव वा वृत्तिः कल्पयितुम् ।

धौम्यः—वत्स ! नेदमप्यदोषमवगन्तुमर्हसि ।

उप—किं कारणं भगवन् !

धौम्यः—वत्स ! अल्पज्ञेनापि सुज्ञेयमिदम्, तथापि यदि न वेत्सि, तदाकर्णय,—मुनिगृहीतावशिष्टैः फलस्तोमैरनन्यशरणाः पक्षिणो जीवन्ति । तदेवं त्वया विहितेनोपप्लवेन निरुद्धवृत्तयस्ते जीवनाद् विमुच्येरन् । मूलेषु च त्वया समाहृतेषु तदुपजीविनां शल्लकीप्रभृतीनां कीदृशी गतिर्भविता ? तदेवं निरस्तश्चरमोऽपि त्वत्परिकल्पितः पक्षः ।

उप—(स्वगतम्) अहो ! व्याघातः ! एवमुपनते सर्वोपायनिरोधे किमस्ति मे शरणं वृत्तये मन्दभाग्यस्य ? ( क्षणं विचिन्त्य ) अथवा दृष्टम् । सन्ति काननप्ररूढानां पादपानां पत्राणि । तान्येव सन्तु मे शरणमनन्यशरणस्य । ( प्रकाशम् ) भगवन् ! अपि नाम शक्या मया भवदनुमत्या वृक्षाणां पत्रकैः कल्पयितुं वृत्तिः ?

धौम्यः—वत्स ! अथ किम् ? शक्यमिदमदोषमभ्युपगन्तुम् । परन्तु वत्स ! वृक्षपत्राण्यपि स्वयमशीर्णानि त्वया नोपयोक्तव्यानि ।

उप—भगवन् ! कथमेतत् ?

धौम्यः—श्रूयतां वत्स !

अन्तःसंज्ञस्य वृक्षस्य पत्रमङ्गं शरीरतः ।
बलाद् वियोजितं तस्य व्यथां सञ्जनयत्यलम् ॥

ततः पादपशरीरात् स्वयं शीर्णान्येव पर्णानि त्वया वृत्तये शक्यान्युपयोक्तुम् ।

उप—एवमेवास्तु भगवन् !

धौम्यः—वत्स ! प्रीतोऽस्मि ते । तद् गच्छेदानीं स्वकृत्यमनुष्ठातुम् ।

शिवास्ते सन्तु पन्थानस्त्वां रक्षन्तु सदा सुराः ।
स्वकृत्ये वर्त्तमानस्य सर्वं करगतं हितम् ॥

उप—अनुगृहीतोऽस्मि । भगवन् ! एष दासस्य मे गृह्यतां प्रणामपर्यायः । तद् गच्छामि ।

धौम्यः—गच्छ वत्स ! पुनर्दर्शनाय । ( निष्क्रान्त उपमन्युः )

धौम्यः—(स्वगतम्) वत्स, उपमन्यो ! अद्य ते महती परीक्षा ! न केवलं तवैव आरुणेरपि तथैव ! तद् अस्या महत्याः परीक्षायाः समुत्तरणाय युवामाशिषा वर्द्धयामि । वत्सौ ! मा मां निष्ठुरवृत्तं मन्येथाम् । तथाहि पश्यतं वत्सौ !

विना हुताशस्य विशेषतापनं
न जातु शुद्धिं समुपैति काञ्चनम् ।
न वा तदेवायसताड़नादृते
मनोहरालङ्करणत्वमश्नुते ॥

तदेतेन युवयोः परिशुद्धया शुभमुदर्कं सम्भाव्य प्रसन्नोऽस्मि । तदिदानीं गच्छामि । ( निष्क्रान्तः ) ।

( क्रमशः )

# वेदान्तविमर्षः

( प्रथमभागः )

[ निबन्धक :—श्रीचारुकृष्णदर्शनाचार्यः ]

(पूर्वतोऽनुवृत्तः)

परेषां मूलप्रकृतिस्त्रिगुणाऽविद्या च सांख्यानां प्रधानमेव, तदेव च बौद्धतर्कैर्मिथ्या संपाद्यानिर्वाच्याविद्या कथ्यते। अविद्योपहितः सर्वज्ञ ईश्वरोऽपि सांख्यानां महत्तत्त्वमेव प्रकृतिजातम्, तदुच्यते—

"मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभावि"ति

आहुश्च सांख्याः—"महदाख्यः स्वयम्भुर्यो जगदङ्कुर ईश्वरः"। इति

यत्तु "तमःप्रधानप्रकृतेस्तद्भोगायेश्वराज्ञया।

वियत्पवनतेजोऽम्बुभुवो भूतानि जज्ञिरे॥" इति

तदपि सांख्यानुकार एव, यथाह तत्त्वकौमुदी "तामसाहङ्कारात् तन्मात्रक्रमेण पञ्चभूतोत्पत्तिरि"ति। तन्मात्रशब्दोऽपि तेषामेव। सूत्रकृता च महदहङ्कारतन्मात्राणि निराकृतानी"तरेषां चानुपलब्धेरि"ति। नचाकाशादीनां सत्त्वरजोंऽशेभ्यो ज्ञानकर्मेन्द्रियोत्पत्तिः श्रौतो वेदान्तेष्वभावात्। नैयायिका एवाहुर्भूतेभ्यो ज्ञानेन्द्रियपञ्चकस्योत्पत्तिम्, तथाच पारमर्षं सूत्रं "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य" इति। तैश्च न कर्मेन्द्रियाणि मन्यन्ते, अतएवा"त्मान्यत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमि"तीन्द्रियलक्षणं कथ्यते। सांख्याश्च सात्त्विकादहङ्कारादेकादशेन्द्रियोत्पत्तिमाहुः, तथाचेश्वरकृष्णः—

"सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारादि"ति—

श्रुतयस्तु "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति"। प्राणा इन्द्रियाणि।

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।

खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी''ति

ब्रह्मण एव प्राणमनसोरिन्द्रियाणां च भूतसाहित्येनैव सृष्टिं प्राहुः । न चान्यत इन्द्रियसृष्टिः श्रुतावुक्ता । सृष्टिप्रक्रियायां यथा प्राणस्य वायोः पृथगुपदेशान्न वायुत्वं तथा मनस इन्द्रियाणां च न भौतिकत्वं तुल्यन्यायाद् बोध्यम् । यथाहुराचार्याः—''न वायुक्रिये पृथगुपदेशादि''ति । प्राणादेरचेतनत्वेऽपि चेतनवत् कार्यसाधनत्वात् देहे जीवात् परमेव प्राधान्यदर्शनाच्च जीवसृष्ट्युत्तरमेव श्रुतौ प्राणादिसृष्टिः प्रोक्ता ज्ञेया । सांख्याश्चात्मनः कौटस्थ्यं कल्पयन्तो बुद्धेरेव देहाद्यध्यक्षतां ब्रुवन्ति । ''बहु स्यां प्रजायेये''ति श्रुतेर्यथा वेदान्तानां स्रष्टुः परमेश्वरादहमभिमानवतः भूतसाहित्यैनैवेन्द्रियाणामुत्पत्तिस्तथा सांख्यानां परमेश्वरकल्पस्य महतोऽहमभिमानात् सहैव पञ्चतन्मात्रैरिन्द्रियाणामुत्पत्तिः । तथाचेश्वरकृष्णः—

''अभिमानोऽहङ्कारस्तस्माद् द्विविधः प्रवर्तते सर्गः ।

एकादशकश्च गणस्तन्मात्रपञ्चकश्चैवे''ति ॥

सत्त्वादयश्च गुणाः सुखदुःखविषादहेतुभिः सांख्यैरेव कल्पिताः, न वेदान्तेषु तद्गन्धोऽपि । एतेन—

''सत्त्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम् ।

तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तद् द्विधा ॥

रजोंऽशैः पञ्चभिस्तेषां क्रमात् कर्मेन्द्रियाणि तु ।

तैः सर्वैः सहितैः प्राणो वृत्तिभेदात् स पञ्चधा ॥'' इति

प्रत्युक्तं वेदान्तेष्वभावात् ।

यदप्युक्तं रज्ज्वां सर्प इव ब्रह्मणि विक्षेपशक्तिमदविद्यातो जगत्सृष्टिरिति तदप्यसारं प्रमाणाभावात्, श्रुतिषु सर्वत्राविद्यानिरपेक्षस्यैव ब्रह्मणः सृष्टिदर्शनात्, तत्र तत्राविद्याशब्दाभावात् पृथिव्योषधिपुरुषकेशलोमादिदृष्टान्तदर्शनाच्च, रज्जुसर्पादिशब्दानां श्रुतिसूत्रयोर्लोकेषु चाभावाद् बहु-

सद्भावाच्च बौद्धतन्त्रेषु। यदप्युक्तं जगदीश्वरब्रह्मणां तप्तायःपिण्डवदेकत्वमिति तदप्यसारं दृष्टान्तासिद्धेर्वह्न्ययःपिण्डयोः स्वरूपभेदात्। वेदान्ते मिथ्यादृष्टान्तस्यैवानुल्लेखादुल्लेखाच्च सत्यदृष्टान्तानां "पटवच्चे"ति "यथा च प्राणादि-रि"ति च, तथा च तन्तुपटवत् प्राणादिवच्च ब्रह्मजगतोरभेदस्तयोरुपादानोपादेयभाववत्त्वात्, तथाच श्रुतिः "सर्वं खल्विदं ब्रह्म" सूत्रं च "तदनन्यत्वमारम्भणशब्दादिभ्य" इति। जगतो मिथ्यात्वे नैतदुपपद्यते, नहि रज्जुः सर्पः शुक्ती रूप्यमिति प्रयोगो लौकिकानां परीक्षकाणां वा, परं रज्जु नं सर्पो नायं सर्पो रज्जुरियमित्येव। निःसत्ताकत्वाच्च रज्जुसर्पादेरसिद्धेः। न च रज्जुसत्ताय आरोपात् सर्पस्य सत्तावत्त्वम्, आरोपे सत्तोपसर्पणाभावात्, ज्ञानमात्रत्वाच्चारोपस्येति तुच्छो रज्जुसर्पः। स्थाणुरयं पुरुष इति च प्रयोगस्तुच्छ एव, तस्मात् तदभिन्नत्वं न तत्सत्तातिरिक्तसत्ताकत्वाभाववत्त्वं किन्तु तत्सत्ताधीनसत्ताकत्वमेवेति ज्ञेयम्।

कार्यसत्ता च कारणसत्तातो भिन्नैव तस्या उत्पादविनाशयोर्दर्शनात् न च कारणसत्तोत्पादविनाशवती तदुक्तं "मृत्तिकेत्येव सत्यमि"ति, तथापि सुवर्णं कुण्डलं तन्तवः पट इत्यनुभवात् कार्यकारणयोरभेद एव। नहि प्रत्यक्षे किञ्चिदसम्भवि, सत्ताभेदाच्च तन्तुपटयोरिति द्विवचनोपपत्तिः। "सर्वं खल्विदं ब्रह्मे"त्यपि सर्वज्ञस्य भगवतो वेदस्य तत्त्वदर्शिनश्च प्रत्यक्षत्वादुपपद्यते। तथाचात्मविदां गाथा "आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वमि"ति।

न च ब्रह्मणो विवर्त्तो जगत् किन्तु विकार एव "वाचारम्भणं विकारो नामधेयमि"ति श्रुतौ "आत्मकृतेः परिणामात्" "यावद्विकारं विभागो लोकवत्" "विकारावर्त्ति च तथाहि स्थितिमाहे"ति सूत्रेषु च विकारपरिणामशब्दयोर्दर्शनाददर्शनाच्च विवर्त्तशब्दस्य। न च विकार एव विवर्त्तः

"सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः।
अतत्त्वतोऽन्यथाप्रथा विवर्त्त इत्युदाहृतः॥" इति

तयोर्भेदेन कीर्त्तनादिति विवर्त्तवादो भूप्ररोहकल्पो निर्मूल एव। विवर्त्तशब्दश्च दृश्यते बौद्धानामेव तन्त्रे, तदुक्तं सूत्रालङ्कारे—

"मायोपमान पश्यति लोकधातून सर्वान ससत्त्वान् सविवर्त्तनाशानि"ति, तस्मात् ब्रह्मैव वस्तु तदितरदवस्तु इति रिक्तं वचः। "कथमसतः सज्जायेत", "ततो वै सदजायत" "नामरूपे सत्यमि"ति श्रुतिषु जगतः सत्यत्वकीर्त्तनात्। व्यवहारिकसत्यस्य बौद्धसिद्धत्वाच्च, न च जगन्मिथ्येति श्रुतिरस्ति सूत्रं वा।

न च ब्रह्म निर्विशेषं निर्विकारं कूटस्थमकर्तृ वा वेदान्तेष्वभावात्, परं सत्यकामं सत्यसङ्कल्पं सर्गादिकर्तृ सर्वज्ञं सर्वशक्ति सच्चिदानन्दमत्यद्भुतं तत्त्वम्। न च तत् सगुणं निर्गुणं वा गुणानां सत्त्वादीनां वेदान्तेष्वसिद्धेः न्यायविदामात्मवत्। देहादयश्च भौतिकाः सत्या एव श्रुतिस्मृतिलोकसिद्धा अर्थक्रियाकारित्वात्, मिथ्यात्वे तदनुपपत्तेः शुक्तिरूप्यैर्भूषणानुतपत्तेर्मरीचिजलैः स्नानपानाद्यनिर्वाहाच्च, रज्ज्वां सर्पभ्रमात् भयकम्पादिश्च ज्ञानादेव भवति तस्यान्तरुत्पन्नत्वेन सत्यत्वात्, न च रज्ज्वां सर्पस्योत्पत्तिरिति दर्शितं सूत्रभाष्ये।

न चाविद्याजातं जगत् येन मिथ्याजातत्वात् सर्वमिदं मिथ्या भवेत्, श्रौतेषु सृष्टिप्रकरणेष्वविद्याशब्दाभावात् नातः सूत्रेष्वस्ति तन्नामापि। यन्नामापि नास्ति वेदान्तेषु तत्प्रपञ्च एवाखिलं जगदित्यहो मिथ्याप्रपञ्चो मायासेविनाम्। बौद्धा एवाहुर्जगत्कारणमनिर्वाच्याविद्येति, "अविद्या संस्कारो विज्ञानं नामरूपमि"ति हि तेषामेव सृष्टिप्रक्रिया। यथा कथञ्चित तन्मतमेव वेदान्तनयत्वेन ख्यापयितुं प्रयासातिशय्यमाश्रितं प्रच्छन्नबौद्धैर्वेदद्वेषिभिः। एषामविद्यैव सर्वाधिकर्त्री सर्गादौ, परं "यतो वा इमानि भूतानि जायन्ते" इत्याद्याः श्रुतयश्चान्तरान्तरा विरुध्यन्ते ब्रह्मकारणत्वं ब्रुवाणा इति तासां मुखमुद्रणार्थमेवाधिष्ठानत्वेन ब्रह्म कथञ्चित् स्पृश्यते तस्योपादानत्वमपि कल्प्यते "भ्रमाधिष्ठानताऽस्माभिः प्रकृतित्वमुपेयते" इति। श्रुतयस्तु विशुद्धस्यैव ब्रह्मणो बहुभवनसङ्कल्पात् सृष्टि-

मभिद्यते नत्वविद्योपहितस्य "तदैक्षत बहु स्यां प्रजायेय" "तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः"

"एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी ॥"

"यथाग्नेः क्षुद्रा विस्फुलिङ्गाः व्युच्चरन्ति एवमेतस्मादात्मनः सर्व्वे प्राणाः सर्व्वे लोकाः सर्व्वे देवाः सर्व्वाणि भूतानि व्युच्चरन्ती"ति। "यथा पृथिव्यामोषधयः सम्भवन्ति" यथोर्णनाभः सृजते गृह्णते च" इति श्रुतयः पृथिव्या वृक्षादिवत् परिणामिकारणत्वमेवाहु र्ब्रह्मणो न रज्जुसर्पवद् विवर्त्ताधिष्ठानताम् । वाचारम्भणश्रुतिश्च घटादेर्मृद्विकारत्वमेवाह न विवर्त्तताम् । न च विकार एव विवर्त्त इत्युक्तमिति तुच्छो विवर्त्तशब्दो रज्जुसर्पादिश्चेति भ्रमाधिष्ठानत्वमुपादानत्वमित्यलीकमेव। न च मायिके कार्येऽधिष्ठानापेक्षा जले स्थले ऽनलेऽनिले वाकाशे यत्र कुत्रापि मायिकानां गजादिसृष्टेर्दर्शनादतो मुधैवाधिष्ठानप्रतिष्ठा तेषाम्। न च सर्पभ्रमोऽनलेऽनिले वा भवति विना रज्ज्वादेः कुतश्चन सादृश्याधायकादित्यलं मायया। मायिकाश्च रक्षन्ति. यथाकामं मायिकान् भावांस्तावत्कालं न तेऽधिष्ठानदर्शनाल्लीयन्ते, लीयन्ते च तेषां रज्जुसर्पादयोऽधिष्ठानेक्षणक्षण एव क्वापीति तुच्छास्ते रज्जुसर्पादयो नितरां। वाधाभावसहितादोषवशाद् भ्रममात्रं जातं विनष्टं च विशेषदर्शनादित्येव तत्त्वम्, न चात्राविद्या किञ्चित् करोति तथात्वे रज्ज्वां व्याघ्रस्य स्थाणौ वा सिंहस्य भ्रमोऽपि जायेत मायिकानां मायायास्तथा दर्शनात्, न च तथा जायते, न चाविद्या स्वभावं जहातीति तुच्छः प्रातिभासिकस्तेषामतो भ्रमनाशोत्तरं नात्र सर्पो जातो दृष्टो नष्टो वेति प्रत्ययः कस्यचित्, किन्तु रज्जुरेव सर्पात्मना भातासीदित्येव लोकानाम्।

नचाविद्यां विना ब्रह्मणः कूटस्थस्य जगत्सृष्टिः परेषां नये इत्यवश्यापेक्ष्या तैरविद्या सृष्टौ, न च सृष्टिप्रकरणेष्वविद्याशब्दो दृश्यते शास्त्रे

इत्यनपेक्ष्यैवाविद्यासहायं स्वयमेव रचयत्यनायासं दृष्टादृष्टप्रचयं जगत् ब्रह्म स्वतन्त्रमित्युद्घोषयन्ति श्रुतयः सर्व्वत्र ।

नचानिर्व्वाच्याविद्योपहितं सद् ब्रह्म जगतः कारणमीश्वरः सर्व्वज्ञः सर्व्वनियन्ताऽन्तर्य्यामीति वदन्ति वेदान्ताः, न च वेदान्ते सृष्टिप्रकरणेष्व-विद्याशब्दोऽपि, दृश्यते च श्रुतौ कर्म्मप्रकरण एव स इति कर्म्मपर एवा-विद्याशब्दः श्रुतौ । द्विविधं हि साधनमुक्तं मुक्तेर्वेदान्ते ज्ञानं कर्म्म च, तत्र विद्याभिन्नं यत् साधनं कर्म्मरूपं तदेवाविद्या ज्ञेया "अन्धं तमः प्रविशन्ति येऽविद्यामुपासते" इति श्रौताविद्यापदस्य तैं विद्याभिन्नकर्म्मपरतया अकामेनापि वक्तव्यत्वादुक्तत्वाच्च । अहमज्ञ इत्यनुभवे च ज्ञानाभाव एव भासते नत्वज्ञानमनिर्व्वाच्यमिति दर्शितं सूत्रभाष्ये । न च भामतीविवरणयोरत्र श्रुतिः काचिदुदाहृता, न च "देवात्मशक्तिं स्वगुणैर्निगूढामि"ति श्वेताश्वतर-वाक्यमविद्यां ब्रूते श्वेताश्वतरेऽविद्याशब्दस्यैवाभावात्, सांख्यानां त्रिगुण-प्रकृतेरेव तत्रात्मशक्तिमायाप्रधानादिपदैरुल्लेखात् ।

विविधैवाविद्या प्रास्थानिकैरिष्यते, यथा कर्म्मैवाविद्या वेदान्तिनां नैयायिकानां च, भ्रम एवाविद्या योगानां सांख्यानां च, विद्याविरोधि-भावरूपा सदसदनिरूपाख्या वरणविक्षेपशक्तिद्वयवत्यविद्या बौद्धानां, सदसदनिर्व्वाच्यावरणविक्षेपशक्तिद्वयवतो भावरूपाऽविद्याच मायावादि-नाम् । अविद्यायाश्च जगत् कारणत्वं बौद्धैरिष्यते मायिकैश्चेति ।

( क्रमशः )

---

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4- for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for member-

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramasnath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkaharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhåttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri. M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakra, varti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada-Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakra varti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members),

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kali ada Tarkacharya, Rs, 5;Rs, 4-8 (for members).

# विज्ञापनम्

## विशेषतो द्रष्टव्यम्

संस्कृतसाहित्यपरिषदो द्विषष्ट्यधिकत्रयोदशशततम ( १३६२ ) वङ्गाब्दीयं वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं, तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा (V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। अतः परं यैस्तावदस्याः परिषदः सदस्यपदावस्थानं नेष्यते तैर्वेयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्

१६८।१, राजा-दीनेन्द्रष्ट्रीट्,

संस्कृतसाहित्यपरिषद्‌भवनम्, कलिकाता—४

# Sanskrit Sahitya Parishat Series

(Revised up to April, 1951)

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1
2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. 1. (for members).
3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.
4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali pada Tarkacharya. (Out of stock.) Rs. 5.
5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).
6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.
7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).
8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

(Cont. to Cover 3rd Page)

Printed by Bishnupada Bhattacharya M.A. Kabyatirtha. at Calcutta Oriental Press Private Ltd., 9, Panchanan Ghose Lane, Calcutta 9 and Published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Shyambazar Calcutta.

Reg. No. C 1073

Vol. XXXIX.
No. 8
३९श-वर्षस्य
८म-संख्या

December 1956
१८७८शकीये
मार्गशीर्षे
मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः
श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—1-4 as



इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

संस्कृतसाहित्यपरिषत्

Vol. XXXIX. No. 8 | १८७८-शकीये मार्गशीर्षे ३९श-वर्षस्य ८म-संख्या | December 1956.

# मतिमञ्जरी

## निखिलभारतकंग्रेसकर्मण्यसम्मेलनम् ।

[ निबन्धकः—श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः ]

साम्प्रतं कलिकातामहानगर्या उपकण्ठे ससमारोहमनुष्ठितं यत् कंग्रेसाख्यजातीयप्रतिष्ठानस्य कर्मण्यसम्मेलनं तत्र सङ्कटसङ्कुलस्य भारतराष्ट्रस्य विशेषतश्च विविधसंकटग्राहग्रस्तत्वेन व्याकुलितस्य वङ्गदेशस्य दुर्दशापनोदनाय किं वा सम्पादितं समाधानं तन्न निरूपयितुं शक्यते निपुणतरं निरीक्ष्यापि कुशलप्रेक्षकैः । भारतराष्ट्रसंचालकधुरन्धराणां महात्मनां श्रीनेहेरुमहोदयानामनन्यसाधारणशक्तिमत्त्वमुद्घोषयति धरित्री, ते त्वधुना जगतः समग्रस्य कल्याणसम्पादनाय चिन्ताकुलाः । स्वराष्ट्रस्य विशेषचिन्तने कुतो वावसरः ? यद्यप्येतन्नासत्यं यद् जगन्मङ्गलसंविधानेनैव भारतराष्ट्रस्यापि मङ्गलमवश्यम्भावि तथापि तड़िद्गत्या यत् कालकरालकवलं प्रविशति भारतराष्ट्रमन्नवस्त्रशिक्षाजनवृद्धिसङ्कटेन तत्राधुना का गतिः ? विविधसत्कार्यसम्पादनप्रस्तावग्रहणेन तेषां यथोचितं समर्थ-

नेनैव सङ्कटराहुमुक्तो जनवदनचन्द्रमाश्चन्द्रिकया जगदाप्लावयिष्यति मुदानु रञ्जयिष्यति च जनचित्तकह्लारमिति तु रिक्तं वचः। सुचिन्तितञ्च वचोऽभियुक्तानां यददृष्टोपहसितानामन्तर्दग्धचेतसां न किमपि मङ्गलं सुदूरापराहतम्। द्वितीयपञ्चवार्षिकपरिकल्पनयापि नापगतघनं भविता भारतगगनम्। यद्येवं दुरपनेया दुर्दशा तदा कोऽभ्युपाय इति चेत् प्रतीक्ष्यतां कस्यचित् तन्त्रचिन्तननिष्णातस्य परार्थसम्पादनपरायणस्य विशेषशक्तिशालिनः सज्जनस्याविर्भावः। यथा श्रीनेहेरुमहात्मना भारतीयादर्शेन जगन्मङ्गलव्रतं गृहीतं तथा यदि केनचित् तथैव भारतीयमादर्शमनुसृत्य भारतमङ्गलाय प्रयत्येत स्वशक्त्या समकर्माणोऽपि तथैवादर्शनानुप्राणिताः कर्तुं शक्येरन तदा तन्त्रविशुद्धिसम्पादनद्वारा समाचरितदुर्णयप्रतिरोधेन क्रमशो वास्तवसमाजतन्त्रप्रतिष्ठा भविष्यति। अपेक्षितसमाजतन्त्रमपि न सर्वथा दोषविनिर्मुक्तम्। तत्राप्यपेक्षा प्राचीनभारतीयादर्शसाक्षिभूतानां सच्छास्त्रानुशासनानाम्। सुजनता समाचरणीया, न वहिरभिनेया, लोलुपता वर्जनीया मनस्तो न कण्ठतः, उदारता प्रदर्शनीया हृदये न भोजने; समता संविधातव्या जीविकानिर्वाहादौ न जात्याकृत्यादौ शुचिता संरक्षणीया धनादौ न परिच्छदमात्रे।

एवं च वस्तुस्थितौ तदेतत्कर्मण्यसम्मेलनमनुष्ठानमात्रं न तत्र दुर्दशाप्रतीकाराशा, "अन्धेनैव नीयमाना यथान्धाः" इति नयेन नास्माभिः पदमपि चलितुं शक्यम्। शुभेच्छामात्मन्याधाय कृत्यकरणाय प्रयतन्तां स्वजीविकापेक्षया दुर्गतानां जीविकां प्रति निरपेक्षं प्रवर्तन्तामुत्कोचग्रहणान्मतिं निवर्तयन्तां, प्रतिवेशिनः समदृष्ट्या निरीक्षन्तां, दुर्वासनां मनसो निर्वासयन्तां यदि यथार्थं समाजस्य राष्ट्रस्य जगतश्च कल्याणं कामयन्ते भवन्तः।

स्वाधीनतार्जनात् प्रागिदमेवैकं जनप्रियं प्रतिष्ठानमासीद् भारतीयानां यत् कंग्रेसाख्यं नाम। अधुनापि वामपन्थीति-नामधेयानामेकस्य कस्यापि शासनव्यवस्थां प्रति नास्ते न जनानामास्था। किन्तु मतिभेद-

भिन्नानां तेषामैक्यं प्रति कुतः समाश्वासः ? आगामिनिर्वाचनमधिकृत्य सर्वे आत्मगुणान् प्रख्यापयन्तो बधिरयन्ति दश दिशो, व्याकुलीकुर्वन्ति च जनमनांसि ! वस्तुतस्त्वश्चेत्थं यत् कंग्रेसं प्रति न सर्वे सन्तुष्टाः, न वा वामपन्थीति ख्यातान् प्रति विश्वासः। यद्यधुना कंग्रेसाख्यं प्रतिष्ठानमन्यद्वा यदेव साधारणजनगणमनःसु विश्वासविशेषं समुत्पादयेत, तदा निर्विवादं कंग्रेसाख्यं प्रतिष्ठानमन्यद्वा तदेव विजयसुभगपताकामाहरिष्यतीति।

---

# गङ्गाष्टकम्

निबन्धकः—श्रीदुर्गादासगोस्वामी, एम. ए. साहित्यशास्त्री

स्वर्लोके शिव-नारदप्रभृतिभिः प्रारब्धगीतोत्सवे
रागैस्ताललयान्वितैः श्रुतिसुखैर्मन्दस्वरैर्झङ्कृते।
स्विद्यद्विष्णुपदाच्छनैर्द्रवमयाद् गङ्गे! त्वमङ्गोदिता-
पश्चाद्ब्रह्मकमण्डलौ विनिहिता त्रैलोक्यमुक्तेः कृते ॥१॥

गुरून् महसि कापिले शलभभाग्यभाजः क्षणात्
प्रमोचयितुमापदः पृथुतपास्तु स त्वां नृपः।
पुरस्तव भगीरथो विजयशङ्खमुच्चैर्धमन्
महीं त्रिपथगामिनीं प्रथितकीर्तिरम्वानयत् ॥२॥

जलकलकलैरापाद्य द्राग् भयं प्रतिमानसं
भुवि परिणता धाराकारैर्दिवस्त्वमवातरः।
प्रलयनिरतामाशङ्क्य त्वां समेत्य तदा सुरै-
र्भुवनमवितुं गङ्गाधारी स्मरारिरुपाश्रितः ॥३॥

ततः प्रालेयाद्रिप्रतिमजटिलत्र्यम्बकशिर-
स्यभूः स्तब्धा रुद्धा विदितसरणिर्देवि ! सुचिरम् ।
जटाजालं भित्त्वा तदनु चलिता तस्य नृपतेः
स्तवस्तोमैस्तुष्टा सगरतनयार्थं भुवि पुनः ॥४॥
उन्मत्तैरावतमदहरि ! स्रोतसा सर्वतस्त्वं
धर्मारण्यं चलमृगजनं प्राविशः प्लावयन्ती ।
जह्नोर्मन्युज्वलितमनसः शोभनां पर्णशालां
पश्चात्तस्य प्रशमितरुषोऽनुग्रहान्निर्गतासीः ॥५॥
मनोज्ञमानवीतनुं विधृत्य मर्त्यलीलया
सुखानि शान्तनुप्रिये ! त्वमन्वभूर्भुवः स्वयम् ।
अधृष्यभीष्मवन्दिते ! तवात्र चित्रकीर्तिभि-
र्जगत् समृद्धिशुद्धिमज्जनश्च धन्यभावभाक् ॥६॥
शुचिमधुरमरुद्भिर्वीचिमालोत्थितैस्त्वं
निखिलदुरितराशिं दूरमुत्सारयन्ती ।
इह खलु वितरन्ती चायुरारोग्यभोगान्
प्रशममपि तथान्ते मुक्तिमाभासि मातः ? ॥७॥
मातर्महेशदयिते ! जननि ! त्रिलोकीं
नित्यं पुनासि सलिलैरपि तारयेस्त्वम् ।
यद्यत्र भाग्यरहितं करुणाकणैर्मा-
मन्ते तवैव भविता स गुणप्रकर्षः ॥८॥
श्रीदुर्गादास-विप्रस्य गङ्गाष्टकमनुत्तमम् ।
ददातु पठितं गङ्गा-भक्तेभ्यो भक्तिमुत्तमाम् ॥९॥

# पूर्वमीमांसायां परमेश्वरः स्वीकृतो नास्ति

[ निबन्धकः—श्रीनारायणचन्द्र-गोस्वामी एम,ए. ]

पूर्वमीमांसां विरचयन् जैमिनिः प्राधान्येन वेदार्थमेव विवेचयति स्म। धर्मानुष्ठानार्थमपेक्षितो वेदार्थनिचयो नोच्यते चारुतया केनापि तमन्तरा। तथापि वेदविदां पुरःसरेणाप्यनेन परमेश्वरस्य वेदैकवेद्यस्य चर्चा स्व-सूत्रेषु मनागपि नाचरितेति समालोकयतां सुतरां चेखिद्यते चेतः परमे-श्वरासक्तचेतसाम्।

परमेश्वरोऽस्तीति मतिर्येषां तानद्य वयं चेदास्तिकान मन्यामहे, तेन जैमिनिमुनेस्तदनुगामिनाश्चास्तिकत्वं संशीतिकवलितं स्यात। सपरि-करं धर्मं व्याचक्षणेन मुनिनातिमहती द्वादशलक्षणी सूत्रिता। तत्र यद्यपि परमेश्वरमधिकृत्य सूत्रमेकमपि न विहितं तेनेति नाविदितं विदु-षाम्। तथापि किञ्चित समालोच्य पूर्वमीमांसकानामाशयं सतां पुरतो यथामति प्रयासः समुपस्थापयितुमिति सूत्रत एवारभ्यते।

जैमिनिना नवमाध्यायस्य प्रथमपादीय-चतुर्थाधिकरणे "पुरुषानुष्ठित-तत्तत्कर्मणां फलदातृत्वं किं तत्तत्कर्माधिष्ठात्र्या देवतायाः कर्मण एव वेति संशयं सन्दर्श्य "देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वा-दि"ति सूत्रेण देवताया एव फलदातृत्वं पूर्वपक्षतया समर्थितम्। ततश्च पुरुषाधिष्ठित-कर्मसु "अपि वा शब्दपूर्वत्वाद् यज्ञकर्मप्रधानं स्यात गुणत्वे देवताश्रुते"रिति सूत्रेण समाराधिताया देवताया गुणभावं व्यवस्थाप्य कर्म-णामेव फलदातृत्वं सिद्धान्तितम्।

नवमाध्याये केवलं देवताया गुणभाव एवोच्यते। दशमाध्याये तु देवतायाः सर्वथाऽभावमेव प्रतिपादयता विधिगतशब्दस्यैव देवतात्वमङ्गी-क्रियते। हविस्त्यागकाले विधिगतशब्दस्यैवोच्चारणकर्तव्यतां व्यवस्था-

पयतार्थो निराक्रियते च। तथाच शब्दरूपैव देवता, न हविर्भुजो विग्रहादिमन्त इति पर्यवस्यति। नवमाध्यायेऽपि "अतिथौ तत् प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिप्रधानत्वादि"तिसूत्रेण देवतायाः प्रीतिर्नास्तीति वदता प्रीत्यपेक्षितं विग्रहादिकं नितरां निराकृतमिति स्पष्टम्। एवं द्वितीयाध्यायस्य प्रथमपादेऽपि स्तुतशस्त्राधिकरणे "स्तुतशस्त्रयोस्तु संस्कारो याज्यावद् देवताभिधानत्वादि"त्यतः फलनिर्वृत्तेश्चे'त्यन्तेन सूत्रसमूहेन विधिगतशब्देनैव देवतात्वमवगमयन् मुनिः शब्दरूपामेव देवतामुरीकरोतीति न तिरोहितम्। तथाच विग्रहादीनामभावेन तद्रहितायाः देवतायाः सर्वथानीशता भवति। अतोऽनीशा देवता न फलदानायालमिति कर्मणामेव तत् सुस्थिरम्।

शास्त्रैकगोचरे परमेश्वरे वेदवचांसि बलवत् प्रमाणम्। युक्तिस्तु तदानुगत्यमन्तरा नितरां निष्फलतामश्नुते। जैमिनिमुनिस्तु वेदवचसामानर्थक्याद् बिभ्यत् सर्वस्य वेदराशेः कार्यपरत्वमेव प्रतिपादयति "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि"त्यादिना। अतः परमेश्वरो न वेदवेद्यः, नापि वेदवक्ता, वेदराशेरपौरुषेयत्वात्। युक्तिमनुसरद्भिर्नैयायिकैर्जाड्यजुषां कर्मणां फलदानानुपपत्त्या प्रपञ्चरचनायाश्चानुपपत्त्या परमेश्वरोऽनुमीयते। तत्राचेतनानां कर्मणामेव फलदातृत्वस्वञ्चेत् व्यवस्थाप्येत, तर्हि चेतनानामपि चेतनस्य परमेश्वरस्य देवतानामिव शब्दमात्रसत्ता स्यात्। अतः परमेश्वरे जैमिनेर्नितरामनादरो दृश्यते।

मीमांसासूत्राणां भाष्ये शवरस्वामिनापि जैमिनिमतमुक्तरूपमेव निरूपितमिति नानाकलितमनुशीलनशालिनाम्। यतो नवमाध्यायस्य प्रथमचतुर्थाधिकरणभाष्ये देवतानां "विग्रहो हविषां भोग ऐश्वर्यञ्च प्रसन्नता, फलप्रदानमित्येतत् पञ्चकं विग्रहादिक"मिति पृथक् पृथक् निराकृत्य विग्रहादीनामभावेन देवतायाः सर्वथा फलदानासामर्थ्यं समर्थितम्। द्वितीयाध्यायप्रथमपादे "नहि अविग्रहायै अभुञ्जानायै च दानं भोजनं वा सम्भवती"त्यादिना पुनस्तदेव स्पष्टीकृतम्।

न केवलं भाष्यकारः शबरः सूत्राणां जैमिनिप्रसूतानाममुमर्थमनुजगाद, बादरायणोऽपि ब्रह्मसूत्ररचयिता तेषां तथैवार्थमवगतवान। यतो "धर्मं तु जैमिनिरत एव" इति सूत्रेण पूर्वपक्षतया जैमिनिमतमुदन्यस्यन कर्मण एव फलदातृत्वं प्रदर्शयामास "ईश्वरस्तु फलं ददातीति सर्वथानुपपन्नमिति भाष्येणाचार्य-शङ्करेणापि तथैवोपसहृतम्। देवताधिकरणेऽपि विदेहत्वे-नासामर्थ्यात् न विद्यायामधिकार इत्यादिना च तस्यैव पुनः कथनम्। "नह्यशरीराणां देवादीनां विवेकविमोकादिसाधनसप्तकानुगृहीत-ब्रह्मोपासनोपसंहार-सामर्थ्यमस्ति। न च देवादीनां सशरीरत्वे प्रमाणमुपलभामहे। देवादीनां विग्रहवत्त्वप्रतिपादनपरं न किञ्चिदपि वाक्यमुपलभ्यते। मन्त्रार्थवादास्तु कर्मविधिशेषतयान्यपरत्वान्न विग्रहादिसाधने प्रभवन्ती"ति शंसन्तः श्रीमन्त आचार्यरामानुजा अपि सूत्रेणामुना जैमिनेराशयं तथैव प्रकाशयन्ति। अतो जैमिनिमतं कर्मणामचेतनानां फलदानान्यथानुपपत्त्या परमेश्वरस्य सिद्धिं प्रति सुतरामननुकूलम्। विचित्र-प्रपञ्चरचनानुपपत्तिस्तु परमवशिष्यते। तत्रापि मीमांसकानां वक्तव्यमस्ति।

तथाहि यदप्रयोजनं न तत् प्रेक्षावत्प्रतिपित्सागोचर इति मर्यादा। एवञ्च विधिविहितेन कर्मानुष्ठानेनानुष्ठातृभिश्चेन्निखिलानि फलानि समधिगम्येरन् तदा चेतनस्य कस्यचन फलदातृत्वाभ्युगमो व्यर्थः। प्रपञ्च-रचनानुपपत्तिस्त्वनेनैव प्रकारेणापगता स्यात्। भूतजातानां कर्मफल-भोगान्यथानुपपत्त्या तदपेक्षितनिखिलवस्तूत्पत्तेरवश्यं भावात्। भोग-सामग्र्यभावे भोगस्य सर्वथाऽसम्भवात्, कर्मणैव निखिलानि भोग्यवस्तूनि भवन्तीति किं प्रयोजनं परमेश्वरेण। "अस्तु वा परमेश्वरः परं किं करिष्यति सः। प्राणिनिकरकर्मसचिवः स विश्वकर्मा, स्वतन्त्रो वा" इत्यादि बहु विकल्प्य जैमिनिमतमनुमोदमानः श्रीकुमारिलभट्टः श्लोक-वार्तिके स्पष्टमेव परमेश्वरं निराकरोतीति सविस्मयमुदाहरामस्तद्-वचः—

"तथा चापेक्षमाणस्य स्वातन्त्र्यं प्रविहन्यते ।
जगच्चासृजतस्तस्य किं नामेष्टं न सिध्यति ॥
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।
एवमेव प्रवृत्तिश्चेत चैतन्येनास्य किं भवेत ।
क्रीड़ार्थायां प्रवृत्तौ च विहन्येत कृतार्थता" । इत्यादि

गुरुनाम्ना विख्यातः सूत्रभाष्यव्याख्यातापरः प्रभाकरः परमेश्वरविषये किमपि नोक्तवान । तथापि तदाशयं शंसन शालिकनाथः कथयति अत्र केचिदर्थवादगतसृष्टिप्रलयश्रुत्युपनिपातमात्रोपजातश्रद्धातिशयविप्रलुब्धहृदयाः कणभक्षाक्षचरणमतप्रवणचेतसः सर्वस्य तनुभुवनादेरीश्वरकारणतामाचक्षाणाः प्रचक्षते सर्वमित्यादि । तदिदं प्रतिपक्षकक्षामपि नारोढुं क्षमत इत्युपेक्षितं भाष्यनिबन्धकारेण । तस्मादेवेश्वरवादोऽस्माभिरपि न निरस्त" इति प्रथममुक्त्वा पुनः स्वयमेव प्रकरणपञ्चिकायां परमेश्वरो नास्तीति प्रतिपादितवान ।

शास्त्रदीपिकाकारेण पार्थसारथिनापि परमेश्वरकर्त्तृता निराकृता । सुतरां परमेश्वरं प्रमापयन्त्यो युक्तयः पदं न लभन्ते जैमिनिमते, वेदराशेः सर्वस्य च कर्मपरताङ्गीकृतास्ति । अतः कथं परमेश्वरो वर्त्ततेति किन्तु मन्ये वेदविदुषां वचसां परोक्षः कोऽप्यर्थोऽस्ति, तेनावश्यं परमेश्वरः प्रतिपाद्यते । परमकरुणाकरं परमेश्वरमन्तरा न सुखमनुभवामो वयम् । अतः स सर्वत्र नित्यं विजयतामिति तमेव प्रार्थयामहे ।

---

# माणवक-गौरवम्

[ निबन्धकः—श्रीकाश्यपकविः ]

( पूर्वानुवृत्तम् )

## पञ्चमाङ्के

### प्रथमदृश्यपटः

ततः प्रविशति समाहितनित्यप्रदोषकृत्यो धौम्यः।

धौम्यः—अतिक्रान्ता प्रदोषवेला। तथाहि—

पादेन सर्वदिवसं गगने विहृत्य
सन्ताप्य तप्तकिरणेन समस्तलोकान।
सन्ध्यात्रये स्थितिमतां प्रणतिं गृहीत्वा
मग्नो रविर्वरुणदिग्जलधौ दिनान्ते॥

अपि च शिष्याः समित्कुशसमाहरणं विधाय
स्व-स्वाश्रमं प्रतिगताः प्रचित-प्रसादाः।
सान्ध्य-श्रुतिध्वनिरभूत् परितः प्रशान्तः
देवालयेषु सरवाः किल शङ्खघण्टाः॥

एष किल साम्प्रतमपरस्तेजोराशिः,—

दिशः सुधाभिः स्नपयन्नशेषा-
स्तमोवितानं सुतरां विभिन्दन्।
दिगङ्गनायास्तिलकायमानः
पूर्वाचलादभ्युदितः सुधांशुः॥

तदस्मै यथाकालं,—

नमो नमः शङ्करमौलिशोभिने, सुधाप्रदानेन जगत्प्रतर्पिणे।
कुमुद्वतीहासविलासहेतवे मनोलयस्थानसुशीतलांशवे॥

समार्पितानि मया सर्वाण्येव नित्यानि प्रदोषकृत्यानि। अथेदानीमवसरः शिष्याणां वार्त्ताग्रहणस्य। नूनमधुना सर्वं एवाश्रमं परिप्राप्ताः। भवतु, आदौ कात्यायनमाहूय जानामि। (प्रकाशम्) वत्स! कात्यायन! कात्यायन! क्वासि? (नेपथ्ये कात्यायनः—एषोऽस्मि भगवन्!)

धौम्यः—इतस्तावदेहि वत्स!

प्रविश्य कात्यायनः—एष प्राप्तोऽस्मि भगवन्!

धौम्यः—वत्स! अपि लब्धं त्वया यथाकामं भैक्ष्यम्?

कात्यायनः—भगवन्! अथकिम्। अद्य सुदूरं गतेन मया लब्धं यथाकामं भैक्ष्यम्।

धौम्यः—साधु वत्स! साधु। चिरं कृत्यकुशलतया वर्द्धस्व।

कात्यायनः—अनुगृहीतोऽस्मि।

धौम्यः—वत्स! अपि नाम सर्वं एवायुष्मन्तस्त्वमिव कृतकृत्या आश्रमं परिप्राप्ताः?

कात्यायनः—भगवन्! अथकिम्। प्रायेण सर्वं एवाश्रमं प्राप्ताः।

धौम्यः—वत्स! प्रायेणेति कथम्?

कात्यायनः—भगवन्! आरुणिमद्यापि नागतं लक्षयामि।

धौम्यः—आरुणिरिदानीमपि नायातः?

कात्यायनः—भगवन्! अथकिम्।

धौम्यः—वत्स! कात्यायन! जानास्येव त्वं यथा प्रभाते शस्योपघातिनः सलिलसङ्घातस्य प्रतिरोधाय वत्स आरुणिर्मया क्षेत्रे विनियुक्त इति।

कात्यायनः—जानाम्येव भगवन्!

धौम्यः—स इह निशागमेऽपि नायातीति महत्या चिन्तया पदं कृतं मे मनसि।

कात्यायनः—(स्वगतं) ममापि तथा।

धौम्यः—तद् वत्स! त्वरं गत्वा ज्ञायतां वृत्तम्।

कात्यायनः—यथाज्ञापयति भगवान्। ( सत्वरं निष्क्रान्तः। )

धौम्यः—सत्यमतिमात्रं चिन्तितोऽस्मि। अपि नाम वत्सस्य आरुणेः कापि विपत्तिरुपनता, येन निशायामपि नायाति? अथवा कुतस्तस्य स्वल्पाया अपि विपत्तेः सम्भावना? कुतः?

कुशलं प्रदिशन्ति देवता
गुरुभक्त्यैव परं प्रतोषिताः
गुरुभक्तिबलेन दीव्यतो
न कुतोऽप्यस्ति किलारुणेर्भयम्॥

उदित्वरप्रकर्षश्चासौ गुरुभक्तिव्रते। तथाहि—

पाषाणसारेण हृदा परीक्षणं
कृतं मया दुस्तरमारुणेर्भृशम्।
सर्वं समुत्तीर्य स शुद्धिमागतः
हुताशदग्धं कनकोत्तमं यथा॥

वत्स! आरुणे! त्वयि तावत्कालं तथा परुषव्यवसायं मामुपलभ्य न जाने कीदृशं मां मन्यसे? वत्स! किमिदं न त्वया विदितम्,—यत्

नारिकेलसमाकारा गुरवः परुषा बहिः।
अन्तः सुमधुरा ह्येते परिणामसुखाः शिवाः॥

भवतु तावदेवम्, तथापि यावदारुणेः कुशलवार्त्तां नोपलभे, तावन्न प्रशाम्यति मे विषीदन्नन्तरात्मा। तदिदानीमाश्रमद्वारं गत्वा वत्समारुणिं कात्यायनञ्च प्रतिपालये।

( निष्क्रान्तः )

---

द्वितीयदृश्यपटः।

ततः एकांशे प्रविशतो गोहलादिसहितौ कृषीवलौ। अपरांशे च केदारखण्डे शयान आरुणिः।

१मः कृषीवलः—( यष्टिप्रहारं कृत्वा ) जाध बइल्ला जाध, लहु लहु जाध।

२यः—अले संकल! मा दाव प्पहालं कलेहि। एदे वि अह्मो विअ पलिस्सन्ता ज्जेव।

१मः—अले सेहर! अत्थि मह वि एवं विण्णाणं जं एदे वि पलिस्सन्ता त्ति, तह वि बुभुक्खाए ताड़णादो एव्वं अणुचिट्ठमि। बुभुक्खाए क्खु हगे दढ़ं पीड़िदोह्मि।

२यः—आम् एवं, ता सुट्ठु क्खु वुच्चदि 'सव्वं णट्टं बुभुक्खाए' त्ति।

१मः—अले! एदेण वअणेण दढ़ं अत्तणकेलअं पण्डिदत्तणं प्पमाणी-कलेसि। ता जधा तधा होदु। अदिमेत्तं सिग्घं गच्छ‌ेहि, जेण अदिसिग्घं भत्तं गेह्णिअ सुहं अणुभवेह्म।

२यः—भोदु, एव्वं भोदु। ( उभौ परिक्रामतः। )

१मः—( दृष्ट्वा ) अले! अदूले केदालखड्डए किण्णु क्खु एदं दिस्सदि ?

२यः—कहिं कहिं ?

१मः—दक्खिणदो मुहं पलिवत्ताविअ पेक्ख।

२यः—(दक्षिणतो मुखं परावर्त्य) आम् दिट्टं। णं एसो को वि मुदो विअ पलिभादि।

१मः—णं मुदो ? हा मादिए! हदोह्मि।

२यः—किं एव्वं तुमं भोदे ?

१मः—कधं ण भीदे हुविस्सं ? मुदं अहिलक्खिअ भूदज्जाणो पलिव-सदि।

२यः—जइ एव्वं, ता रामसद्दं उच्चालेहि, रामसद्देण भूदजोणी दूले पलाअदि।

१मः—सुट्ठु, ता एव्वं कलेमि। राम राम राम राम! सेहर! सिग्घं सिग्घं आअच्छ। ( शीघ्रं निष्क्रान्तौ। )

आरुणिः—(स्वगतम्) भगवता गुरुणा क्षेत्रे प्रविशतः सलिलसङ्घातस्य प्रतिषेधाय समादिष्टो मृत्तिकाखण्डैर्विफलकामो गत्यन्तरमनासादयन् केदारप्रणालिकायां स्वकीयं कायं सन्निपात्य पार्श्वेन शयितोऽस्मि। तेन च तत्क्षण एव निरुद्धो जलसङ्घातः। अहो आश्चर्यम्! सलिलसङ्घाते समन्ततः संसर्पन्तः सर्पादयो मे नाल्पमप्यपकुर्वन्ति। तन्नूनमेष प्रभावो गुरुकरुणायाः, कथमन्यथा शरीरार्द्धेन सुचिरं सलिलान्तःस्थितस्य मुक्तप्रबलप्रभञ्जनोपद्रुतस्य मे नातितरां जाड्याभिभवोऽपि? नो वा दुःसहः परिक्लेशः? यथा तथा वास्तु, नाद्यापि सम्यक् प्रशान्तः सलिलवेगः। तद् यावदस्य सलिलसङ्घातस्य न प्रचण्डवेगोपशमस्तावदेवात्र मया तथैव स्थेयम्। 'जयन्ति नः श्रीगुरुपादरेणवः'।

(तथैव स्थितः।)

(ततः प्रविशति सोत्कण्ठः कात्यायनः।)

कात्यायनः—(स्वगतम्) इदं तदस्मदीयं क्षेत्रम्, यत्र भगवता सलिलप्रतिरोधार्थमारुणिर्नियुक्तः। तदत्र कस्मिन् प्रदेशे वयस्येनारुणिना भवितव्यम्? भवतु, उच्चैराकारयामि। (प्रकाशम्) वयस्य! आरुणे! क्वासि? एषोऽहं कात्यायनस्त्वामामन्त्रयामि।

आरुणिः—(श्रुतिमभिनीय) अये आर्यकात्यायनः प्राप्तः! आर्य कात्यायन! एषोऽहं सलिलप्रतिरोधाय केदारप्रणालिकायां शयानस्तिष्ठामि। तदित एहि।

कात्यायनः—एष आगच्छामि। (उपसृत्य) वयस्य! अपि कुशली त्वम्?

आरुणिः—अर्थाकम्। सर्वतः कुशलं मे भगवत्-प्रसादात्। आर्य! गृह्यतामिदानीं कालानुरूपो वाङ्मात्रकृतः प्रणतिपर्यायः।

कात्यायनः—सर्वतः कुशलो भूयाः।

(क्रमशः)

---

# वेदान्तविमर्षः

( प्रथमभागः )

[ निबन्धक :—श्रीचारुकृष्णदर्शनाचार्यः ]

(पूर्वतोऽनुवृत्तः)

न च तत्त्वज्ञानादविद्या जगदुपादानभूता नश्यतीति श्रुतिराह सूत्रं वा किन्तु कर्म्मरूपैवाविद्या नश्यतीति, यथा—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" ॥ इति

आत्मज्ञानादज्ञानं नश्यतीति वक्तव्ये कर्माणि क्षीयन्ते इति वदन्ती श्रुतिर्वेदान्तनये कर्मणामविद्यात्वं स्पष्टं दर्शयामास । न्यायश्च "तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशावि"ति । सांख्यसम्मतजीवन्मुक्तस्यापि ज्ञानिनो यथायथं कर्माचरणमुक्तवान् भगवान्—

"गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते" ॥ इति

न चैतद् विश्वप्रलये युज्यत इति भाव्यम् । न च तत्त्वज्ञानात् सर्वेषां विनाशे ज्ञानिनः सर्वज्ञता सम्भवति किन्तु विद्यमान एव सर्वस्मिन्, आह च श्रुतिर्ब्रह्मविज्ञानेन सर्वविज्ञानम्, "येनाश्रुतं श्रुतं मतं भवत्यमतं मविज्ञातं विज्ञातमि"ति । तदानीं स्वप्नेन्द्रजालमरुजलशशशृङ्गादिवज्जगत प्रलयानुभवश्च बौद्धानामेव, तैरेव हि मिथ्याऽविद्याजातस्य जगतः स्वप्नमायालातचक्रमरीच्यम्भोवन्मिथ्यात्वमिष्यते, यथाह बौद्धः,—

"अलातचक्रनिर्माणस्वप्नमायाम्बुचन्द्रकैः ।
धूमिकान्तप्रतिश्रुत्कामरीच्यद्भिः समोभवः" । इति
"गन्धर्वनगराकारं मरीचिस्वप्नसन्निभमि"ति च

नास्ति वेदान्तेष्वेतेषां गन्धोऽपि। वेदान्ते चा"त्मैवेदं सर्वम्" "अहं मनुरभवं सूर्यश्चे"त्यात्मतादात्म्यानुभव एवोक्तः। रज्जुसर्पवज्जगतो मिथ्यात्वे तु नैवं युज्यते, रज्जुरेव सर्प इति तादात्म्याननुभवात् रज्जुर्न सर्पो नायं सर्पो रज्जुरियमिति तेषामेवोक्तेः। न च तत्त्वज्ञानेन जगतः प्रलयात् "आत्मैवेदं सर्वमि"ति श्रुत्या नात्मजगतोस्तादात्म्यप्रत्ययः किन्तु जगतस्तत्त्वमात्मैव न तु जगतः स्वतन्त्रं तत्त्वमस्तीत्येव प्रत्यय इति वाच्यं। सर्पभ्रमनाशे रज्जुर्न सर्प इति सर्पतत्त्वप्रज्ञानेन रज्जुप्रत्ययस्योदयात्, न तु रज्जुरेव सर्प इति सर्पस्य तत्त्वं रज्जुरेवेतीति विभाव्यम्। अतः स्थाणुः पुरुष इति जल्पनं कल्पनामात्रमेव ज्ञेयम्। न च घटाकाराकारितधीवृत्तेर्घटगताज्ञाननाशकत्वं जड़ाया धीवृत्तेस्तदसम्भवात् ज्ञानस्यैवाज्ञाननाशकत्वनियमादित्युक्तेः।

विभिन्नैवाविद्या प्रास्थानिकैरिष्यते तत्र कर्मैवाविद्या वेदान्तिनां नैयायिकानां च, भ्रम एवाविद्या साख्यानां योगानां च। विद्याविरोधिभावरूपा सदसदनिरूपाख्यावरणविक्षेपशक्तिद्वयवत्यविद्या बौद्धानाम् सदसद्भ्यामनिर्वाच्यावरणविक्षेपशक्तिद्वयवतीभावरूपाविद्या मायावादिनाम्। अविद्यायाश्च जगत्कारणत्वं बौद्धैरुक्तं मायावादिभिश्च।

श्रवणं नाम श्रुतिवाक्येभ्यो गुरुमुखात् सामान्यत आत्मतत्त्वग्रहणं न तु विचारेण निष्कृष्टार्थावधारणपर्यन्तं मननवैयर्थ्यात् मननं च विचारशास्त्रोक्तयुक्तिभिः श्रुतनिष्कृष्टार्थावधारणं, नत्वनुमानं मन्तव्यश्चोपपत्तिभिरित्युक्तेः, नापि वेदार्थानुगुणयुक्तिभिरनवरतमनुचिन्तनं ध्यानाभ्यासरसेन चेत्यभ्यास पदेन ध्यानस्यैवानवरतत्वविधानात्, सर्वमेतन्निदिशति विष्णुपुराणम्—

"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः" ॥ इति

अत्रापि ध्यान एव सातत्यमुक्तं न श्रवणमननयोरिति ज्ञेयम्। अतएव निदिध्यासितव्य इति श्रुतौ ध्यान एव नीत्युपसर्ग उक्तो नतु श्रवण-

मननयोः। योगी अप्याहुः "तत्र प्रत्ययैकतानता ध्यानमि"ति। उपपत्तिश्च विचारशास्त्रोक्तयुक्तिर्न हेतुर्लक्षणापत्तेः। एतेन शुक्तिरूप्यादिबौद्ध-दृष्टान्तैर्दृश्यत्वादिहेतुभिर्जगन्मिथ्यात्वानुमानं हेयम्। न वा तत्तत्-सम्प्रदायकल्पिता युक्तिरुपपत्तिरप्रामाण्यात्। यथा "सदेव सौम्येदमग्र आसीदि"ति सत्पदार्थः सर्गादिकर्त्तृ चेतनं ब्रह्मैव न प्रधानमित्यर्थः "ईक्षतेर्नाशब्दमि"ति न्यायादेवावधार्यते। श्रुतिश्चासत्कारणवादनिरासेन सतएव कारणत्वं व्यवस्थापितवती, तत्र युक्तिं चोक्तवती "कथमसतः सज्जायेते"ति, तद्दार्ढ्यार्थमेव चा"न्नेन शुङ्गेनापोमूलमन्विच्छे"त्याद्युक्त्वा पुनरद्भिः सौम्य शुङ्गेन तेजोमूलमन्विछ तेजसा सौम्यशुङ्गेन सन्मूल-मन्विछ सन्मूलः सौम्यमाः प्रजाः सदायतनाः सत्प्रतिष्ठा" इत्यभ्यासेन सत एव कारणत्वं दर्शितवती। उपसंहारे च सत एव कारणत्वं तस्य चात्मत्वं जीवस्य च सत्यत्वं व्यवस्थापयामास "ऐतदात्म्यमिदं सर्वं तत् सत्यमि"ति। अस्यार्थ इदं सर्वमाकाशादिभूतजातम् एतस्मिन्नात्मनि पूर्वोक्ते सद्रूपे भवं तत् तस्मात् सत्यं नान्यथा भवितुमर्हतीत्यर्थः। स सत्पदार्थं आत्मा अतिवृहत्त्वात् मातृत्वाच्च तस्यात्मत्वमित्यर्थः। "आत-तत्वाच्च मातृत्वादात्मा हि परमो हरिरिति श्रीधरस्वामिधृतस्मृतेः। हे श्वेतकेतो त्वमपि तत् सत्यमसि न मिथ्येत्यर्थः, विवृतं सूत्रभाष्ये।

एतेन जगत्कारणं परमात्मा सत्यो जीवोऽपि सत्यो नासद्वादिना-मिव मिथ्येति नवकृत्वोऽभ्यासेन दर्शितं। भगवतश्च सत्यत्वं सिद्धमेवान-दितं युक्त्यातत् सत्यमिति। उक्तं च महाभारते—

"ब्रह्म सत्यं जगत् सत्यं सत्यं चैव प्रजापतिः।
सत्याद् भूतानि जातानि सत्यं भूतमयं जगत्॥" इति

( क्रमशः )

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4- for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for member-

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramas nath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri-M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakra, varti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada-Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakra varti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members),

24. **Sataranja Kutuhalam:**—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam:**—(a new MahaKavya) of MM. Kali ada Tarkacharya, Rs, 5; Rs, 4-8 (for members).

# विज्ञापनम्

## विशेषतो द्रष्टव्यम्

संस्कृतसाहित्यपरिषदो द्विषष्ट्यधिकत्रयोदशशततम ( १३६२ ) वङ्गाब्दीयं वार्षिकं मूल्यं ( Annual Subscription ) यैर्ग्राहकमहोदयैरेतावत्कालपर्यन्तं न परिशोधितं, तैः कृपया सत्वरं तत् प्रेषणीयम्। अन्यथा (V. P.) डाकयोगेन प्रेरणे व्ययाधिक्यं भविता। अतः परं यैस्तावदस्याः परिषदः सदस्यपदावस्थानं नेष्यते तैर्वयं तूर्णं विज्ञापनीयाः। इति—

विनीत—संस्कृत-साहित्य-परिषत्-सम्पादकानाम्

१६८।१, राजा-दीनेन्द्रष्ट्रीट्,

संस्कृतसाहित्यपरिषद्-भवनम्, कलिकाता—४

## Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

(Cont. to Cover 3rd Page)

Printed by Bishnupada Bhattacharya M.A. Kabyatirtha. at Calcutta Oriental Press Private Ltd., 9, Panchanan Ghose Lane, Calcutta 9 and Published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Shyambazar Calcutta.

